Apart from the question of its borrowings from valued sources, or its affiliation to any particular work of note like the *Chanakya Sutra*, this manual has an importance of its own. If wise apophthegms clothed in a finished poetic garb have a power to attract, delight, and instruct our minds, it can well claim to be put by the side of such collections as the *Laghu-Chanakya* and *Vriddha Chanakya.*

96, Amherst Street,
CALCUTTA, 1921

NARENDRA NATH LAW

---

# चाणक्य-राजनीतिशास्त्रम् ।

## प्रथमोऽध्यायः ।

एकदन्तं त्रिनयनं ज्वालानलसम-प्रभम् ।
गणाध्यक्षं गजमुखं प्रणमामि विनायकम् ॥ १ ॥
प्रणम्य शिरसा विष्णुं त्रैलोक्याधिपतिं प्रभुम् ।
नानाशास्त्रोद्धृतं वक्ष्ये राजनीति-समुच्चयम् ॥२॥
येन सम्यगधीतेन प्रज्ञाविस्तरतो नृणाम् ।
सत्यशौचरतो नित्यं हिंसाक्रोध-विवर्जितः ॥ ३ ॥
पठित्वैवं शुभं शास्त्रमिदं ज्ञास्यति तत्त्वतः ।
धर्म्मोपदेशं व्याख्यातं कार्य्याकार्य्यं शुभाशुभं ॥ ४ ॥
तदहं सम्प्रवक्ष्यामि यज्ज्ञात्वा पुरुषोऽचिरात् ।
लभते विपुलाङ्कीर्त्तिं न चार्थेन वियुज्यते ॥ ५ ॥
रहस्यभेदं पैशुन्यं परदोषानुकीर्त्तनम् ।
कलहं परनिन्दाञ्च दूरतः परिवर्ज्जयेत् ॥ ६ ॥
श्रूयतां धर्म्मसर्व्वस्वं श्रुत्वा चैवोपधारयेत् ।
आत्मनः प्रतिकूलानि न परेषां समाचरेत् ॥ ७ ॥
वर्ज्जयेत् क्षुद्रसंवादं परिष्टस्य च दर्शनम् ।
विवादं सह मित्रेण प्रीतिञ्च सह शत्रुभिः ॥ ८ ॥
मूर्खशिष्योपदेशेन दुष्टस्त्री-भरणेन च ।
द्विषतां सम्प्रयोगेण पण्डितोऽप्यवसीदति ॥ ९ ॥

कालेन रिपुणा सन्धिः काले मित्रेण विग्रहः ।
कार्यकारणमाश्रित्य कालं क्षिपति पण्डितः ॥ १० ॥
कालः संवर्द्धते बीजं कालो गर्भं प्रसूयते ।
कालोऽजनयत पुत्रं पुनः कालोऽपि संहरेत् ॥ ११ ॥
कालात्प्ररोहति वृक्षः पुनः कालः प्रवर्त्तते ।
स्थूलसूक्ष्मगतिः कालो विविधस्तस्य चोच्यते ॥ १२ ॥
कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः ॥ १३ ॥
कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ १४ ॥
अदाता पुरुषस्त्यागी धनं सन्त्यज्य गच्छति ।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥ १५ ॥
मूलसूत्रं प्रवक्ष्यामि चाणक्येन यथोदितम् ।
यस्य विज्ञानमात्रेण सर्वज्ञत्वं प्रपद्यते ॥ १६ ॥
राजानो यज्ञभूमिश्च ब्राह्मणो नटनर्त्तकौ ।
अवश्यं सततं गन्तव्यं महापातकनाशनम् ॥ १७ ॥
यस्मिन् यत्र यत्रस्थ उपस्थिते सह तत्स्थितः ।
अनुरूपैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ १८ ॥
परवादं परस्यैव परिहासं परस्त्रियाम् ।
परवेश्मनि वासञ्च न कुर्वीत कदाचन ॥ १९ ॥
परोऽपि हितवान् बन्धुः बन्धुरप्यहितः परः ।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ २० ॥
नारी नश्यति रूपेण तपः क्रोधेन नश्यति ।
गावो दूरप्रवासेन शूद्रान्नेन द्विजोत्तमः ॥ २१ ॥

स बन्धुर्योहितं भुङ्क्ते स पिता पुत्रपोषक. ।
तन्मित्रं यत्रसद्भाव. स देशो यत्र निर्वृतिः ॥ २२ ॥
सजीवति गुणो यस्य धर्म्मोयस्य सजीवति ।
गुणधर्म्म-विहीनो यो जीवितं तस्य निष्फलम् ॥२३ ॥
जीवने यस्य जीवन्ति मित्राणीष्टाः सबान्धवाः ।
सफलं जीवितं तस्य आत्मार्थं को न जीवति ॥ २४ ॥
मतिजीवति वित्तेन सुखं जीवति विद्यया ।
किञ्चिज्जीवति शिल्पेन चलं कर्म्म न जीवति ॥२५॥
पिता च ऋणवान् शत्रुः माता शत्रुः स्वैरिणी ।
भार्य्यारूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ २६ ॥
सा भार्य्या या प्रियब्रूते स पुत्रो यत्र निर्वृतिः ।
सद्भृत्यो यस्तु चित्तज्ञ स्वाहीनं यत् परीहति ॥ २७ ॥
सा भार्य्या या गृहे दक्षा साभार्य्या या प्रियंवदा ।
सा भार्य्या या पतिप्राणा साभार्य्या या प्रजावती ॥२८॥
सा भार्य्या या गृहे दक्षा साभार्य्या या प्रियम्वदा ।
नित्यस्नाता सुगन्धाच नित्यञ्च प्रियभाषिणी ॥ २९ ॥
साध्वी सुशीलसम्पन्ना सुरूपाच गुणान्विता ।
देवाग्निगुरुभक्ताच सा भार्य्या भोगमोक्षदा ॥ ३० ॥
आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता ॥ ३१ ॥
अर्द्धं भार्य्या शरीरस्य भार्य्याऽभीष्टमता सुखम् ।
भार्य्यामूलं त्रिवर्गस्य भार्य्याऽमैत्रेण नश्यति ॥ ३२ ॥
सदाप्रहृष्टाल्पसन्तुष्टा मिथ्याव्ययपराङ्मुखी ।
यस्यश्चैतादृशी भार्य्या देवेन्द्रोऽसौ नमानुषः ॥३३॥

भार्य्यावन्त: क्रियावन्त: सतत गृहमेधिन: ।
भार्य्यामूलं कुलं सर्व्वं तस्माद्भार्य्या परागति: ॥ ३४ ॥
देवब्राह्मणभक्ताच नित्य धर्म्मानुपङ्गिनी ।
यस्य भार्य्या भवेत् नित्य देवेन्द्रोऽपीनमानुष: ॥ ३५ ॥
सततं मङ्गलैर्युक्ता सततं धर्म्मवत्सला ।
सतत स्नानयोन्नाच सतत द्विजपूजका ॥ ३६ ॥
भर्त्तृभक्ताच सतत सर्व्वसौभाग्यवर्द्धिनी ।
यस्यचैतादृशी भार्य्या देवेन्द्रोऽपी नमानुष. ॥ ३७ ॥
यस्य भार्य्याविरूपाक्षी कश्मला कलहप्रिया ।
उत्तरोत्तरदात्रीच सा जरा न जरा जरा ॥ ३८ ॥
यस्य भार्य्या सदा दुष्टा परवेश्माभिगामिनी ।
कुचेष्टा त्यक्तलज्जा च सा जरा न जरा जरा ॥ ३९ ॥
नास्तीतिवादिनी नित्य क्षुत्पिपासा समन्विता ।
भर्त्तृघ्नी निर्दया दीना सा जरेति स्मृता बुधै ॥ ४० ॥
चाण्डाल स्वपिति हृष्टा भक्षयन्ती सदाऽखिलम् ।
परित्यक्ता निजैः पुत्रैर्बान्धवै स्वजनैस्तथा ॥ ४१ ॥
चौरी स्वामी परीवीच योगिनी स्वाधिकारिणी ।
प्रागल्भा वाक्दोषाच स्वादसाम्नीति पद्मगुणा ॥४२॥
पश्चदीनाच सर्वासा मालया कुत्सितप्रिया ।
प्रघोरेयुर्नगच्छन्ति भुञ्जतेऽग्रे तथाविधम् ॥ ४२ ॥
या तु भार्य्या क्षुधितृष्णा मिष्टान्न प्रियवादिनी ।
अप्रमत्ता भर्त्तृभक्ता सा गौरित्युच्यते बुधै: ॥ ४४ ॥
दुष्टा भार्य्या शठ मित्र भृत्यश्चोत्तरदायक
ससर्पेच गृहे वासो मृत्युरेव न संशय: ॥ ४५ ॥

वह्नेरान्निङ्गनीया वरमपि च शिखा काकजिह्वाकराला,
न स्त्रीसेव्या विदग्धैः परनरगमन भ्रान्तचित्ताविरक्ता ॥ ५४ ॥

शठेषु मैत्रं कृपणेषु दानं,
शीतं हुताशे पतनं हिमाद्रौ ।
उत्पद्यते दैववशात् कदाचित्,
वेश्यानुराग सहजस्तु न स्यात् ॥ ५५ ॥

काकः पद्मवने धृतिं न लभते हंसश्च कूपोदके,
क्रीडा सिंह गुहान्तरे सुविपुले गोचस्तु भद्रावने ।
कुस्त्री सत्पुरुष न जातु भजते वा वैश्यतं दुर्जनैः,
या यस्य प्रकृति विधातृ विहिता सा तस्य किं वार्यते ॥ ५६ ॥

भुजङ्गमे वेश्मनि दृष्टनष्टे,
देहे चिकित्सा विनिवृत्तरोगे ।
हस्तादृगते विहिते नामयन्ते,
गर्भे प्रकोष्ठान्तरिते धृतिः का ॥ ५७ ॥

स्फुलिङ्गान्निङ्गनात्कुद्ध क्रूरसर्पोपसर्पणात् ।
मकरालयपाताच्च कष्टं नृपति सेवनम् ॥ ५८ ॥

नागोभाति मदेन कं जलरुहै पूर्णेन्दुना शर्वरी,
वाणीव्याकरणेन हंसमिथुनै नद्य सभा पण्डितैः ।
शीलेन प्रमदा जवेन तुरगो नित्योत्सवै मन्दिरम्,
सत्पुत्रेण कुलं फलैर्वसुमती लोकत्रयं भानुना ॥ ५९ ॥

इति चाणक्य राजनीति शास्त्रे प्रथमोऽध्याय ॥१॥

त्यजेत् स्वामिनमत्युग्र मनुग्रात् कृपणन्त्यजेत् ।
कृपणादविशेषज्ञ सर्व्वथा पक्षपातकम् ॥ ११ ॥
त्यज दुर्ज्जन संसर्ग भज साधु समागमम् ।
कुरु पुण्यमहोरात्र स्मर नित्यमनित्यताम् ॥ १२ ॥
देशं त्यजेद्वृत्तिहीन स हृत्तिक समाविशेत् ।
त्यजेत् कृपणभूपाल मनु सामान्यत स्त्यजेत् ॥ १३ ॥

धनेन कि कृपण हस्तगतेन तेन
रूपेण कि गुणपराक्रम वर्ज्जितेन ।
मित्रेण कि व्यसनकाल पराङ्मुखेन,
ज्ञानेन कि बहु मठाधिप मत्सरेण ॥ १४ ॥

यदृष्टपूर्व्वा बहव सहाया सर्व्वे पदस्थस्य भवन्तिवश्या ।
अर्थविहीनस्य पदच्युतस्य भवेन्नि काले स्वजनो ऽपि शत्रु ॥१५॥

स्थानस्थितस्य पद्मस्य मित्रे सलिलभास्करौ ।
स्थानच्युतस्य तस्यैव क्लेद दाहकरावुभौ ॥ १६ ॥
आपत्काले सम्मानञ्च दुर्भिक्षे शत्रुसङ्कटे ।
राजद्वारे श्मशानञ्च यस्तिष्ठति स बान्धव ॥ १७ ॥
आपत्सु मित्र जानीयाद् रणे शूर रह शुचिम् ।
भार्य्याञ्च विभवक्षीणे दुर्भिक्षञ्च प्रियातिथिम् ॥ १८ ॥

वृक्ष क्षीणफल त्यजन्ति विहगा शुष्कसर सारसा,
निर्द्रव्य पुरुष त्यजन्ति गणिका भ्रष्ट श्रिय मन्त्रिण ।
पुष्प पर्य्युषित त्यजन्ति मधुपा दग्ध वनान्त मृगा,
सर्व्वे कार्य्यवशाज्जनोऽभिरमते कस्यास्ति को वल्लभ ॥१९॥

लुब्धमर्थ प्रदानेन क्रुद्धमञ्जलिकर्म्मणा ।
मूर्खं कथानुरूप्याच्च यथोकुर्व्वन्ति पण्डिता ॥ २० ॥

उत्तमः प्रणिपातेन शूरो भेदेन युज्यते ।
नीचः स्वल्पप्रदानेन समस्तुल्यपराक्रमैः ॥ २१ ॥
यस्य यस्य हि यो भाव स्तस्य तस्य विभाव्यताम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ २२ ॥
प्रस्ताव सदृशं वाक्यं स्वभाव सदृशं मनः ।
आत्मशक्ति-समं कोपं यो जानाति स पण्डितः ॥ २३ ॥
नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रिणां स्त्रियाम् ।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥ २४ ॥
अर्थनाशं मनस्तापं गृह-दुश्चरितानि च ।
मानञ्चैवापमानञ्च मतिमान् न प्रकाशयेत् ॥ २५ ॥
कस्य दोषः कुलेनास्ति व्याधिना को न पीड़ितः ।
को न वा व्यसनं प्राप्तः कस्य श्रीर्नियता भवेत् ॥ २६ ॥
यस्मिन् कर्म्मणि सिद्धेऽपि लभ्यते न फलोदयः ।
असिद्धे तु महद्दुःखं तद्बुधः कथमाचरेत् ॥ २७ ॥
कोऽर्थान् प्राप्य न गर्वितो भुवि नरः कस्यापदोऽस्तं गताः,
स्त्रीभिः कस्य न खण्डितं बत मनः को नाम राज्ञां प्रियः ।
कः कालस्य भुजान्तरं न च गतः कोऽर्थी गतो गौरवम्,
को वा दुर्जन वागुरा-निपतितः क्षेमेण यातः पुमान् ॥ २८ ॥
यस्मिन् देशे न सम्मानं न प्रीतिर्न च बान्धवाः ।
न च विद्यागमोऽप्यस्ति तत्र वासं न कारयेत् ॥ २९ ॥
धनस्य यस्यास्ति न राजतो वा न चौरतो वापि भयं कदाचित् ।
विद्याख्यमन्तर्द्धनमर्ज्जयेत्तदन्यधनं नश्यति सर्व्वमेव ॥ ३० ॥
यदर्जितं प्राणहरैः परिश्रमैर्मृतस्य तत्सम्विभजन्तिरिक्थिनः ।
कृतञ्च यद्दुष्कृतमर्थलिप्सया तदेव दैवोपहतस्य यौतुकम् ॥ ३१ ॥

अर्थितं क्रतुषु नोपयुज्यते,

याचितं गुणवते न दीयते ।

तत् कदर्य परिगत धनम्,

चौर पार्थिव गृहेषु भुज्यते ॥ २२ ॥

अर्जित निहित भूमौ परामृष्ट मुहुर्मुहु ।

पाषाणैरिव कदर्यस्य धन दु खाय केवलम ॥ २३ ॥

न ज्ञायते वा परलोक सिद्धये न कीर्तये नापि सुखोपभुक्तये ।

तया मनस्ताप भुवैव किं श्रिया दुर्भार्ययेव स्वपदार्पितामया ॥२४॥

मातेव रक्षति पितेव हिते नियुङ्क्ते,

कान्तेव चाभिरमयत्यपनीय दु खम ।

कीर्तिंच दिक्षु वितनोति ददाति लक्ष्मीम्,

किं किं न साधयति कल्पलतेव विद्या ॥ २५ ॥

विद्यानाम नरस्य रूपमधिकं प्रच्छन्नगुप्त धनम्

विद्या भोगकरी यश सुखकरी विद्यागुरूणा गुरु ।

विद्या बन्धुजनो विदेशगमने विद्याऽध्यय चक्षुतम्,

विद्या राजसु पूज्यते बहुधनो विद्याविहीन पशु ॥ २६ ॥

षड्भिरिमगवाप्नोति मिष्टान्न विद्यादिव

राजसौख्य इव सौख्य स विद्यामधिगच्छति ॥ २७ ॥

हर्तुर्याति न गोचर किमपि श पुष्णाति सर्वार्थिना,

ह्यर्थिभ्य प्रतिपाद्यमान मनिश विद्या परा गच्छति ।

कल्पान्तेष्वपि न प्रयाति निधन विद्याख्यमन्तर्धनम्,

येषा तान् प्रतिमान मुज्झत नृपा कस्तै सहस्पर्धते ॥ २८ ॥

किन्तया समस्त्यापि श्रिया देशान्तराश्रया ।

रिपवो यां न पश्यन्ति सुहृद्भिर्या न भुज्यते ॥ २९ ॥

दीना निवसना रूक्षाः कपालाङ्कित-पाणयः ।
दर्शयन्तीह लोकानामदातुः फलमीदृशम् ॥ ४० ॥
दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गति र्नाशः ॥ ४१ ॥
नद्यश्च नार्य्यश्च समस्वभावाः स्वातन्त्र्यभावेन यथाधिकत्वात् ।
तोयैश्च दोषैश्च निपातयन्ति नद्यो हि कूलानि कुलानि नार्य्यः ॥४२॥
न तृप्तिरस्ति मिष्टानामिष्टानां प्रियवादिनाम् ।
सुतानाञ्च सुखानाञ्च जीवितस्य धनस्य च ॥ ४३ ॥
गान्धर्वं गन्धसंयुक्तं ताम्बूलं भारती कथा ।
इष्टा भार्य्या प्रियं मित्रं अपूर्व्वाणि दिने दिने ॥ ४४ ॥
तथैव राजा धनसञ्चयेन न सागरो भूमि जलागमेन ।
न पण्डितः साधु-सुभाषितेन तथैव चक्षुः प्रियदर्शनेन ॥४५॥
स्वकर्म धर्म्मार्ज्जित जीवितानाम्,
शास्त्रेषु दारेषु सदारतानाम् ।
जितेन्द्रियाणां अतिथि-प्रियाणाम्,
गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥ ४६ ॥
मनोऽनुकूलाः प्रमदा रूपवत्यः स्वलङ्कृताः ।
वासः प्रासादपृष्ठेषु भवन्ति शुभकर्म्मणाम् ॥ ४७ ॥
निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।
शुभकर्म्माणमायान्ति सहायाश्च धनानि च ॥ ४८ ॥
शनैरर्थः शनैः पन्थाः शनैः पर्व्वतमारोहेत् ।
शनैर्विद्या च धर्म्मश्च व्यायामश्च शनैः शनैः ॥ ४९ ॥
स्वाश्रितं विधिवद्दान माश्रितं सत्यभाषणम् ।
आश्रितो मधुरा भिक्षा स्वयं पितुश्च शासनम् ॥ ५० ॥

न भोजने विलम्बीस्यात् न च स्यात् स्त्रीषु सेवकः ।
सुदूरमपिविद्यार्थी व्रजेद्गरुड-वेगवत् ॥ ५१ ॥

ये बाल्यभावे न पठन्ति विद्या, ते यौवनस्था अधना अधीराः ।
ते शोचनीया इह जीवलोके, मनुष्यरूपेण मृगाश्चरन्ति ॥ ५२ ॥

येषां न विद्या न तपो न दानं, ज्ञानं न शीलं न गुणो नधर्मः ।
ते मर्त्यलोके भुवि भारभूता , मनुष्यरूपेण मृगाश्चरन्ति ॥ ५३ ॥

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्नाः,
नाऽसौ मुनिर्यस्य मतं न भिन्नम् ।
धर्मस्य तत्त्वं निहितं गुहायाम्,
महाजनो येन गतः स पन्था ॥ ५४ ॥

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्र विकाराभ्यां ज्ञायतेऽन्तर्गतं नृणाम् ॥ ५५ ॥

उदीरितार्थं पशुनापि गृह्यते, हयाश्च नागाश्च वहन्ति चोदिताः ।
अनुक्तमप्यूहति पण्डितो जन , परेङ्गित ज्ञान फलाश्चि बुद्धय ॥५६॥

केचिद्भयेन बिभ्रति विनीत-भावम्,
अन्येजना विभव लोभवशात प्रथमा ।
केचिच्च साधुजन संसदि कीर्त्ति-लोभात्,
सद्भाववान् जगति कोऽपि नसाधुरस्ति ॥ ५७ ॥

केचित् स्वभाव-शुचिनोऽत्र यथाक्षपिण्डाः,
कर्कन्धु-पाक सदृशा भुवि सन्तिचान्ये ।
दृष्टा सुधाफल तुल्य जवा स्तथान्ये,
तेन त्रिधैव भुवनं वितथेऽपि सत्त्वाः ॥ ५८ ॥

इति चाणक्य राजनीति शास्त्रे द्वितीयोऽध्याय ॥ २ ॥

## तृतीयोऽध्यायः ।

योध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि ॥ १ ॥

आमस्य हीनस्य जनस्य विद्या,
शस्त्रं यथा कापुरुषस्य हस्ते ।
न तुष्टिमुत्पादयते परेषाम्,
अन्धस्य दारा इव दर्शनीया ॥ २ ॥

अग्निहोत्रफला वेदाः शीलवृत्तिफलं श्रुतम् ।
रतिपुत्रफला दारा दानयज्ञफलं धनम् ॥ ३ ॥

पालयेत् कुलजां प्राज्ञो विरूपामपि कन्यकाम् ।
सुरूपाञ्च विरूपाञ्च विवाहे सदृशी वधू ॥ ४ ॥

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्विवाहो मैत्री च न तु पुष्टविपुष्टयोः ॥ ५ ॥

हविर्दैव कुलाद्ग्राह्यं बालादपि सुभाषितम् ।
अमेध्यात्काञ्चनं ग्राह्यं स्त्रीरत्नं दुष्कुलादपि ॥ ६ ॥

विषादप्यमृतं ग्राह्यं पङ्कादपि सरोरुहम् ।
अरिभ्योऽप्युत्तमा विद्या स्त्रीरत्नमकुलादपि ॥ ७ ॥

सर्वस्वमपि गीर्वाण्याचार्योवर्ज्जयेत सुतं ।
पयोऽपि धर्म्मं शीलं पुत्रं पुनः सदैव च ॥ ८ ॥

सत्कुले योजयेत्कन्यां मित्रं धर्मेण योजयेत् ।
व्यसने योजयेच्छत्रुं पुत्रं विद्यासु योजयेत् ॥ ९ ॥

स्थानेष्वेव नियोक्तव्या भृत्याश्चाभरणानि च ।
नहि चूडामणिः पादे प्रभवामीति धार्यते ॥ १० ॥

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्य्यते वन एव वा ॥ ११ ॥
चूड़ामणेः समुद्रोर्मि-घट्टनात् खण्डनं वरम् ।
न तथा पृथिवी-पाल-मूर्ध्नि पादावधारणम् ॥ १२ ॥
वाजि वारण लौहानां काष्ठ पाषाण वाससाम् ।
नारी पुरुष तोयानां अन्तरं महदन्तरम् ॥ १३ ॥
न सदश्वाः कशाघातं न सिंहो घनगर्जितम् ।
परै रङ्गुलि-निर्द्दिष्टं न सहन्ते मनस्विनः ॥ १४ ॥
सकृद्दुष्टन्तु यो मित्रं पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १५ ॥
उपकार-गृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥ १६ ॥
उपकार शतेनैव दुर्जनः केन साध्यते ।
साधुः सम्मानमात्रेण भवत्येवात्म-विक्रयी ॥ १७ ॥
अपकारिषु मा पापं चिन्तयस्व महामते ।
स्वयमेव हि नश्यन्ति कूलजाता इव द्रुमाः ॥ १८ ॥
अनर्थोऽप्यर्थरूपेण तथार्थोऽनर्थरूपभाक् ।
उत्पद्यते विनाशाय तस्मात्तत्र परीक्षयेत् ॥ १९ ॥
कार्य्यमालोचितापायं मतिमद्भिर्विचेष्टितम् ।
न केवलं हि सम्पत्तौ विपत्तावपि शोभते ॥ २० ॥
विविच्य स्वात्मनैवादौ पश्चाच्च सहधीमता ।
कार्य्यं कुर्य्यात् सिद्धये तत्रवाच्यो विधिर्भवेत् ॥ २१ ॥
धन धान्य प्रयोगेषु विद्या संग्रहणेषु च ।
आहार व्यवहारेषु त्यक्तलज्जः सदा भवेत् ॥ २२ ॥

दैवज्ञः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥ २३ ॥
लोकयात्रा भयं लज्जा दाक्षिण्यं धर्मशीलता ।
तत्र देशे न वस्तव्यं यत्र नास्ति चतुष्टयम् ॥ २४ ॥
ऋणप्रदाता वैद्यस्तु श्रोत्रियः सजला नदी ।
राजा यत्र न विद्यन्ते न कुर्यात्तत्र संस्थितिम् ॥ २५ ॥
सुखार्थी च त्यजेद्विद्यां विद्यार्थी च त्यजेत् सुखम् ।
न विद्या सुखयोः सन्धिस्तेजस्तिमिरयोरिव ॥ २६ ॥
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ २७ ॥
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः ॥ २८ ॥
छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे ।
फलन्ति च परस्यार्थे सत्पथस्था इव द्रुमाः ॥ २९ ॥
दुर्जनैः सह सङ्गेन सज्जनोऽपि विनश्यति ।
जलं प्रसन्नमप्याशु पङ्कः कर्दमतां भवेत् ॥ ३० ॥
प्रियवक्तेऽपि विश्वासो न कार्यो दुर्जने क्वचित् ।
धत्तेऽमृतं स जिह्वाग्रे हृदि हालाहलं विषम् ॥ ३१ ॥
दुर्जनस्य मुखे प्रीतिर्वाचि चन्दनशीतता ।
हृदये तस्य दुर्बुद्धिः कुलिशादपि कर्कशा ॥ ३२ ॥
अप्रगल्भाः पदन्यासे जननीरागहेतवः ।
सन्त्येते बहुलालापाः कवयो बालका इव ॥ ३३ ॥
सफलत्वं सचापत्वमार्जवं गुणसङ्गतिम् ।
दर्शयन्तः प्रविशन्तः खला घ्नन्ति शरा इव ॥ ३४ ॥

ध्यानेन नीचोत्तम मध्यमेन,
यो येन जानाति स तेन विद्वान् ॥ ४३ ॥

मधुघट शतसिक्ते स्वादुता नास्ति निम्बे,
घृतपल शत होमैः शीतलत्वं न वह्नेः ।
फल शत परिक्लृप्तेऽप्यूषरेनास्ति शस्यम् ;
त्यजति न नीचभावं दुर्जनः सेवितोऽपि ॥ ४४ ॥

मणुरपिमणिः प्राणप्राणदक्षो विषमदलपात् ।
मितरपिकथम् सिंहो सृतुः समाश्रयते गजान् ॥ ४५ ॥

तनुरपि तरुस्कन्धोद्भूतो दहत्यनलो वनम् ।
प्रकृतिर्महता आलम्बया न मूर्त्तिमपेक्षते ॥ ४६ ॥

वरं नरः सत्पुरुषावमानितो-
न नीचसम्मान शताभिपूजितः ।
वराश्वपादाभिहतोऽपि शोभते,
न गर्दभस्योपरि भूषिताकृतिः ॥ ४७ ॥

दुःशीलोऽपि द्विजः पूज्यो नतु शूद्रोजितेन्द्रियः ।
क. परित्यज्य गान्दुष्टा दुग्धाच्छीलवतीं खरीम् ॥ ४८ ॥

मिशुरपि निपतति सिंहोमदमलिन कपोल भित्तिगजेषु ।
प्रकृतिरेव सत्ववता नयय खोजसो हेतुः ॥ ४९ ॥

निर्गुणेष्वपि सत्वेषु दया कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्ना चन्द्रश्चण्डालवेश्मनः ॥ ५० ॥

कस्मादेशात् क्षपयति तमः सप्तसप्तिः प्रजानाम्,
छायाहेतोः पथि विटपिनामञ्जलिः केनबद्ध. ।
अभ्यर्थ्यन्ते नवजलमुचः केनवा वृष्टि हेतो.,
जात्यैवैते परहितविधौ साधवो बद्धकाङ्क्षाः ॥ ५१ ॥

खण्डितं कुट्टितं पिष्टं पुनश्चापि द्रवीकृतम् ।
तथा न लवणं स्वादु गोवजे विकृतिः कुतः ? ॥ ५२ ॥

अनुचिते विधिकर्मणि युज्यते,
शठधिया प्रभुना सगुणो जनः ।
भवति मान्यगुणापचयस्ततः,
पदगतस्य किरीटमणेरिव ॥ ५३ ॥

कनकभूषणसंग्रहणोचितं
यदिमणिं त्रिपुणी प्रतिबध्यति ।
न स विरौति न चापि विशोभते,
भवति योजयितुर्वचनीयता ॥ ५४ ॥

आक्रोशितोऽपि कुलजो न वदत्यवाच्यम्,
निष्पीडितो मधुरमेव वमेत् किलेक्षुः ।
नीचो जनो गुणशतैरपि सेव्यमानः,
हास्येषु यद्वदति तत् कलहेषु वाच्यम् ॥ ५५ ॥

यत् स्थूलेन वदन्त्यन्ये अन्ये सन्तापयन्ति तम् ।
हेलयैव हसन्तस्तदसन्तः कर्मीकुर्वते ॥ ५६ ॥

क्रुद्धो गुरुर्वदति यानि पदानि शिष्ये,
दावाग्निदाहसदृशानि भवन्ति तानि ।
तान्येव तत्परिचयेन सुशिक्षितानि,
पश्चाद्भवन्ति कमलाकर शीतलानि ॥ ५७ ॥

चन्दनतलपरिकृष्टेऽप्यपरं नास्ति शस्त्रम्,
फणिनि परिचयाप्ते नास्ति सम्प्रीतियोगः ।
मधुररससमेतं स्वादुता नास्ति निम्बे,
न स्वगुणविरहिण्यो जातयः सन्ति कापि ॥ ५८ ॥

गुणवन्तोऽपि सीदन्ति न गुणग्राहको यदि ।
सगुणः पूर्णकुम्भो हि यथा कूपे निमज्जति ॥ ५८ ॥
यदि भवति विहीनः प्रच्युतो वा स्वदेशात्,
न हि खलजन सेवामर्थयन्त्युत्तमात्मा ।
न तु तृणमुपभुङ्क्ते सः क्षुधार्तोऽपि सिंहः,
पिबति रुधिरमुष्णं प्रायशः कुञ्जराणाम् ॥ ६० ॥
दुर्जनवदन-विनिर्गतवचनभुजङ्गेन सज्जनो दष्टः ।
तद्विषहरणनिमित्तं प्राज्ञः शान्त्यौषधं पिबति ॥ ६१ ॥
कपिकुलनखमुखमथितललितफलभोजनं वरम् ।
न पुनर्धनमदगर्वितमुखभङ्गकटर्षिता वृत्तिः ॥ ६२ ॥
वरमरण्ये वसितः पुलिन-स्थली,
तरुतले फलमूल-जलाशिनः ।
स्थितिरनर्गलवल्कल-वाससो-,
न तु महाजनराधम-सङ्गम ॥ ६४ ॥
इतश्चयचतैलतण्डुलशाकेन्धन-चिन्तया दीनम् ।
विपुलमतेरपि पुंसो नश्यति धीमन्दविभवत्वात् ॥ ६३ ॥
गङ्गातरङ्गजलशीकरशीतलानि,
विद्याधराध्युषितचारुशीलातलानि ।
स्थानानि किं हिमवतः प्रलयङ्गतानि,
येनावसानपरपिण्डरता मनुष्याः ॥ ६५ ॥
जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवम्,
शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तव्यशक्तिस्थिरे,
तत् को नाम गुणोऽभवत् गुणवतां यो दुर्जनैर्नाङ्कितः ॥६६॥

शक्योवारयितुं जलेन हुतभुक् छत्रेण वर्षातपौ,
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषम्,
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ६७ ॥
पाण्डित्यस्य विभूषणं मधुरता शौर्यस्य वाक्संयमः ,
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रेऽर्पणम् ।
अक्रोधस्तपसः क्षमा प्रभवतां धर्मस्य निर्व्याजता,
सर्व्वेषान्तु विशुद्धभावचरितं शीलं परं भूषणम् ॥ ६८ ॥
येतावन्मलयोपकण्ठनिलयास्तेष्विन्धनं चन्दनम्,
तीरोपान्तनिवासिनां जलनिधे रत्नानि पाषाणवत् ।
काश्मीरेषु निवासिनामपि तृणं नायाति वः कुङ्कुमं,
दूरस्थस्य महार्घता परिमलं सम्भावतो जायते ॥ ६९ ॥
दुर्जनदूषितमनसां पुंसां सुजनेषु नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयते ॥ ७० ॥
पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे,
निर्वाते व्यजनं मदान्धकरिणां शान्त्यै शिरस्यङ्कुशः ।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता,
कष्टं दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥ ७१ ॥
सद्वृत्तोऽप्ययमाप्य सरसफलभरो रक्तकान्त्युज्ज्वलश्री
कान्तानामाप्तिंस्तोऽप्यतिशयमधुरास्वादुर्विस्मयदोऽपि ।
हृद्यान्तर्भिन्नभिन्नावलिप्रचुरसो दाडिम कोपगर्भान्,
ताम्राख्याति केवलकफलमुत्पश्यसा कर्णयेषु ॥ ७२ ॥
रक्षोरण्यपरिभ्रमन्ति कतिचित्तीक्ष्णाभियोगक्षमाः ,
तर्कव्याकरणप्रमादिनिविडाभ्यासं कियत्कोमलम् ।

यदृणाढो विनयो यशोयदमलं यद्दीतराग मन ,
यत्पौजन्यमखण्डित यदि गुणस्तेनैव विद्वान् जन ॥ ७४ ॥
इति चाणक्य राजनीति शास्त्रे तृतीयोऽध्याय ॥ ३ ॥

— * —

## चतुर्थोऽध्याय ।

पार्थिवस्यैव वक्ष्यामि वृत्तानाचैव सञ्चयम् ।
यथाभिज्ञो महीपाल सम्यगभूतान् प्रपालयेत् ।
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं नकारयेत् ।
मालाकार इवारामे न यथाङ्गार कारक ॥ २ ॥
दुग्धा हि मुच्यते क्षीरं गा विक्रीय न मुच्यते ।
तद्वद् दुग्धप्रयोगेन भोग्य राष्ट्र महीभुजा ॥ ३ ।
जङ्घ न चोरविच्छेदात् पयोधेनोरवाप्यते ॥ ४ ॥
तस्मात्सर्वप्रयत्नेन मही योगेन पालयेत् ।
पालकस्य यथो लोके बलमायुश्च वर्द्धते ॥ ५ ॥
लिङ्गपूजनधर्मात्मा गोब्राह्मणहिते रत ।
प्रजापालविधु प्राज्ञ स राजा यो जितेन्द्रिय ॥ ६ ॥
राजाकुर्वीत धर्म्मेण धनसञ्चयमेवत ।
धन्यतस्तेन सतत वर्द्धयेदुत्तमान् द्विजान् ॥ ७ ॥
ॐकारयज्ञो विमाधा यस्य राष्ट्रे प्रवर्त्तते ।
स राजापि भवद् योगी व्याधिभिश्च न पीड्यते ॥ ८ ॥
यज्ञार्थे प्रकुर्व्वन्ति मुनयोऽप्ययज्ञसञ्चयम् ।
किं न कुर्वन्ति भूपाला येषां कोषवशा प्रजा ॥ ९ ॥

सन्धौ विरोधे दाने च यत्नः स्वात्म-सुखोदये ।
अपि मोक्षपरित्रासावर्थौ सम्भुर्महीभुजः ॥ १० ॥
न मनुष्यगण' कश्चिद् दृढत्वमतिवर्त्तते ।
परोक्षभावादन्यत्र सत्कलापि रोगिणः ॥ ११ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स हि पण्डितः ॥ १२ ॥
धनं जातिर्धनं रूपं धनं विद्या धनं यशः ।
किं धनेन विहीनानां याज्ञाभिर्जीवितैर्गुणैः ॥ १३ ॥
अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ १४ ॥
रूप वश्यैर्वंश भाग्यैरुत्तम मानमर्थिभिः ।
महाकुल विवाहैश्च कुल क्रीणाति वित्तवान् ॥ १५ ॥
वित्तायत्ताः सदा धर्मा वित्त कामनिबन्धनम् ।
वित्तायत्तानि वित्तानि वित्त जीवित वर्द्धनम् ॥ १६ ॥
धनं रूपमवैक्लव्यं धनं कुलं सुमङ्गलम् ।
धनं यौवनमम्लानं धनमायुर्निरामयम् ॥ १७ ॥
गुणा धनेन लभ्यन्ते न धनं लभ्यते गुणैः ।
धनी गुणवता सेव्यो न गुणी धनिना क्वचित् ॥ १८ ॥
धनिनो जातिर्हीनस्य मित्रसन्तुष्टसमस्तथा ।
अधोमुखस्य खड्गस्य सर्वे कोपादच्छियैया ॥ १९ ॥

वृद्धः प्रसिद्धो विबुधो विदग्ध,
गुरुः श्रुतिज्ञः कवयः कुलीनाः ।
विलोकयन्तः सधनस्य वक्त्रम्,
जयेति जीवेति सदा वदन्ति ॥ २० ॥

धनाद्धि धर्म्मं क्रियते धनेन,
धनेन धन्या धनिनो भवन्ति ।
धनं विना कामकथैव नास्ति,
त्रिवर्गमूलं धनमेव नान्यत् ॥ २१ ॥

स्वगृहेऽपि दरिद्राणां विघ्नं बान्धवदर्शनम् ।
धनिना परलोकेऽपि प्रेम्णा स्निग्धजनाश्रुव ॥ २२ ॥

एको हि दोषो गुणसन्निपाते,
निमज्जतीन्दोः किरणेष्विवाङ्क ।
कनापि नूनं कविना न दृष्टम्
दारिद्र्यदोषो गुणराशिनाशि ॥ २३ ॥

कुत पारस्य मठी विषस्य क्वापि गच्छति ।
गतिर्न गम्यते प्राज्ञ धनस्य च घनस्य च ॥ २४ ॥

धनिनः सुखिनो नित्यं निर्धना दुःखभाजनाः ।
धनिनां निर्धनानाञ्च विभागः सुखदुःखयोः ॥ २५ ॥

इदं लब्धमिदं नष्टमिदं लप्स्ये मनोरथम् ।
इदं चिन्तयतामेव जीर्णमायुः शरीरिणाम् ॥ २६ ॥

त्यजन्ति मित्राणि धनैर्विहीनम्,
पुत्राश्च दाराश्च सुहृज्जनाश्च ।
तमर्थवन्तं पुनराश्रयन्ति
ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ २७ ॥

यत्रोदकं तत्र वसन्ति हंसा,
तत्रैव शुष्कं परिवर्जयन्ति ।
प्राप्ते जले तत्पुनराश्रयन्ति,
न हंसतुल्येन जनेन भाव्यम् ॥ २८ ॥

चण्डालश्च दरिद्रश्च द्वावेतौ तुलया धृतौ।
एकः स्वबन्धुभिः त्यक्तः स्तेनैव त्यज्यतेऽपरः ॥ २९ ॥
एतदर्थं हि धीमन्तो राज्यमिच्छन्ति भूभुजः।
यदेषां सर्व्वकार्य्येषु वाचा न प्रतिहन्यते ॥ ३० ॥
यच्छक्यावप्युपेयन्ते किञ्चित्तन्नास्ति कारणम्।
सम्भूय कार्यं कथयेत् सुपायोऽसौ न मूढता ॥ ३१ ॥
सन्तापं न कुर्व्वीत विपदं प्राप्य पार्थिवः।
चाण्डनयोदयं संशयस्थाङ्गो सुखी न वा ॥ ३२ ॥
धीराः कष्टमपि प्राप्य न भवन्ति विषादिनः।
प्रविश्य वदनं राहोः किन्नोदेति पुनः शशी ॥ ३३ ॥
गोपयेत् स्वानि रन्ध्राणि पररन्ध्राणि चिन्तयेत्।
कुशोदेन निवर्त्तेत राज्यमिच्छन्नृपः स्थिरम् ॥ ३४ ॥
शास्त्रीयेच्छाक्रममर्य्यादा हेतुवादेन यो नरः।
स नश्यति पुनः क्षिप्रमिह लोके परत्र च ॥ ३५ ॥
द्यूतेषु मृगयायाञ्च स्त्रीषु पाने ह्यटने।
निद्रायाञ्च निवेशेन क्षिप्रं नश्यति भूपतिः ॥ ३६ ॥
एकं चक्षुर्विवेको हि द्वितीयं सत्समागमः।
तौ नष्टौ यस्य स क्षिप्रं मोहकूपे पतेद्ध्रुवम् ॥ ३७ ॥
जात्यन्धोऽपि वरं राजा न तु शास्त्र-विवर्जितः।
अन्धः पश्यति चारेण शास्त्रहीनो न पश्यति ॥ ३८ ॥
गान्धर्वं नृत्यमालेख्यं वाद्यञ्च गुणि नायकान्।
धर्मशास्त्रं धनुर्वेदं यत्नाद्विद्यान्महीपतिः ॥ ३९ ॥
धर्म्मविज्ञानमर्जाय पुमानमरवत् सदा।
केशेष्विव गृहीतः सन् मृत्युना धर्ममाचरेत् ॥ ४० ॥

व्याघ्रीव तिष्ठति जरा परिकर्त्तयन्ती,
रोगाश्च शत्रव इव प्रहरन्ति गात्रे ।
आयु परिस्रवति भिन्नघटादिवाम्भो
लोको न चात्महितमाचरतीति कष्टम् ॥ ४१ ॥

मधुपवनहताम्रकदलीदलबिन्दु
तडिज्ज्वलनशिखा कलाप शरदम्बुदच्छविवद् ।
जगदिति चञ्चलं सकलमित्यवगम्य बुधा ,
पिबन्ति सुभाषितामृतरस श्रवणाञ्जलिभि ॥ ४२ ॥

यावत्स्वस्थमिद शरीरमरुज यावज्जरा दूरगा,
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुष ।
आत्मश्रेयसि तावदेव हि बुधै कार्य्य प्रयत्नो महान्
सन्दीप्ते भवनेऽपि कूपखनन प्रत्युद्यम कीदृश ॥ ४३ ॥

क्षण सम्पदिव सुदुर्लभा,
प्रतिलब्धा पुरुषार्थसाधनी ।
यदि नाम विचिन्त्यते हितम,
पुनरप्यस्य समागम कुत ? ॥ ४४ ॥

सत्य मनोरमा काम सत्य रम्या विभूतय ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोल हि जीवितम ॥ ४५ ॥

क्षणध्वंसिनि कायेऽस्मिन् चलत्स्व परिणामिनि ।
परोपकारसारैव श्लाघा शरीरिणाम ॥ ४६ ॥

ऐश्वर्यमध्रुव प्राप्य ध्रुव धर्मे मति कुरु ।
क्षणादेव विनाशिन्य सम्पदोऽप्यात्मना सह ॥ ४७ ॥

यथा खरश्चन्दनभारवाही
भारस्य वेत्ता न तु चन्दनस्य ।

तथा जनोऽयं बहुशास्त्रपाठो,
शास्त्रस्य पाठो न तु निश्चयस्य ॥४८॥
मातापितृमयो बाल्ये यौवने दयितामयः ।
तदपत्यमयः शेषे मूढो नात्ममयः क्वचित् ॥ ४९ ॥
येनार्जिता श्रियो रत्नाः पुत्रा मित्राणि बान्धवाः ।
तेनार्जिता समस्तेयं चतुरन्ता वसुन्धरा ॥ ५० ॥
वश्याः पुत्राश्च भृत्याश्च मन्त्रिणश्च पुरोहिताः ।
यस्येन्द्रियाणि गुप्तानि तस्य श्रीर्वर्धते चिरम् ॥ ५१ ॥
उद्योगः साहसं धैर्यं बुद्धिशक्तिः पराक्रमः ।
षड्गुणः षड्विधो यस्य तस्य देवोऽपि शङ्कते ॥ ५२ ॥
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ५३ ॥
क्वचिद्वस्त्रं क्वचिद्भूमिं क्वचिद्रत्नान् क्वचिद्धनम् ।
दत्त्वा तु साधयेत्कार्यं न हानिं परिकल्पयेत् ॥ ५४ ॥
लुब्धकेन वनं गत्वा सुतस्यार्थे सुतो हतः ।
सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ॥ ५५ ॥
लोका यथा किल तथा न हि भूपतिस्स्यात्,
यद्भूपतिः खलु यथैव तथैव लोकाः ।
धर्मप्रवृत्तिरथ तद्विपरीत वृत्तिः,
स्वच्छे जने नरपतिः प्रभवत्यशेषम् ॥ ५६ ॥
राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥ ५७ ॥
अनाथानां नाथो गतिरगतिकानां व्यसनिनाम्,
विनीतो भीतानामभयमधृतीनां भरणयः ।

सुहृद्बन्धुः स्वामी प्रणयमुपकारी वरगुरु,
पिता माता भ्राता जगति पुरुषो य स नृपतिः ॥ ५८ ॥

उत्खातान् प्रतिरोपयन् कुसुमितान् चिन्वन् लघून् वर्द्धयन्,
अत्युच्चान् नमयन् पृथून् विरलयन् विश्लेषयन् संहतान् ।
तीक्ष्णान् कण्टकिनो बहिर्नियमयन् म्लान् रोपितान् पालयन्,
मालाकार इव प्रयोगनिपुणो राज्ये चिरं तिष्ठति ॥ ५८ ॥

इति चाणक्य-राजनीति शास्त्रे चतुर्थोऽध्याय ॥ ४ ॥

---

## पञ्चमोऽध्याय. ।



परीक्ष्य प्रथम भृत्यान् उत्तमाधममध्यमान् ।
योजयेत्ताद्दृशेष्वेव नृपति स्वपु कर्मसु ॥ १ ॥

यथा चतुर्भि कनकं परीक्ष्यते
ऽघर्षण च्छेदन ताप ताडनै ।
तथा चतुर्भि पुरुष परीक्ष्यते,
कुलेन शीलेन गुणेन कर्मणा ॥ २ ॥

कुलशीलगुणोपेत सत्यधर्मपरायण ।
रूपीय सुप्रसन्नश्च सेनाध्यक्षो महीपते ॥ ३ ॥

इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शन ।
अप्रमादी महार्थश्च प्रतीहार स उच्यते ॥ ४ ॥

मेधावी वाक्पटु प्राज्ञ सत्यवादी जितेन्द्रिय ।
सर्व्वशास्त्रार्थतत्त्वज्ञो लिपिज्ञ साधुलेखकः ॥ ५ ॥

समानि समशीर्षाणि घनानि वर्त्तुलानि च ।
मात्रासु प्रतिबद्धानि यो जानाति स लेखकः ॥ ६ ॥
प्रगल्भो बुद्धिमान् वक्ता परचित्तोपलक्षकः ।
धीरो यथोक्तवादी च दूत इत्यभिधीयते ॥ ७ ॥
अज्ञानदोषनिरतं महापुरुषविग्रहम् ।
महाजनविरोधञ्च दूरतः परिवर्जयेत् ॥ ८ ॥
प्रवीणः स्वामिभक्तश्च सत्यवादी जितेन्द्रियः ।
अलुब्धोऽल्पधनैस्तुष्टो गजाध्यक्षो महीपतेः ॥ ९ ॥
पितृपैतामहो दक्षः शास्त्रज्ञो मिष्टपाचकः ।
शौचयुक्तः प्रभोर्भक्तः सूपकारोऽभिधीयते ॥ १० ॥
आयुर्व्वेदकृताभ्यासः सर्व्वेषां प्रियदर्शनः ।
दृष्टकर्मा सुशीलश्च प्राज्ञश्च भिषगुच्यते ॥ ११ ॥
ज्ञानविज्ञानसम्पन्नः प्रियवादी जितेन्द्रियः ।
सम्यग्विद्योपदेशी च शुचिराचार्य्य उच्यते ॥ १२ ॥
वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्व्वादपरो नित्यं पार्थिवस्य पुरोहितः ॥ १३ ॥
लेखकः पाठकश्चैव गणकः प्रतिबोधकः ।
ग्रहमन्त्रप्रयोक्ता च कालज्ञो राज्ञ उच्यते ॥ १४ ॥
गणितज्ञो लिपिज्ञाता श्रुतिस्मृतिपरायणः ।
ब्राह्मणो ग्रहमन्त्रज्ञो दैवज्ञोऽपि राज्यकः ॥ १५ ॥
अदीर्घसूत्रः स्मृतिमान् कृतज्ञो नीतिशास्त्रवित् ।
धीमानायतिदर्शी च मन्त्री राज्ञः सुसन्निधिः ॥ १६ ॥
षण्ढः कुब्जो मन्दबुद्धिर्वृद्धोऽसक्तो जितेन्द्रियः ।
निस्पृहश्च यथोक्ता च राज्ञोऽन्तःपुररक्षकः ॥ १७ ॥

निरालस्याः सुसन्तुष्टाः सुस्वप्नाः सुप्रबोधिनः ।
सुखदुःखसमा धीरा भृत्या जगति दुर्लभाः ॥ २६ ॥
दम्भान्वितान् कपटिनो हिंस्रानुक्रोशवर्जितान् ।
प्रगल्भान् भयभीतांश्च राजा भृत्यान् विवर्जयेत् ॥ २७ ॥
धान्य इन्धनमथान्नं शस्त्राणि विविधानि च ।
दुर्गं प्रवेशनीयानि सततं शत्रुशङ्कया ॥ २८ ॥
पञ्चाशत्समथवा वर्षं सन्धिं कुर्यान्नराधिपः ।
आत्मनो बलमालोक्य पश्चाच्छत्रुं निपातयेत् ॥ २९ ॥
मन्त्रिवर्गेषु सारोऽयं हृदि नित्यं प्रवर्तता ।
मुखे वदति माधुर्यं हृदये कार्यनिश्चयम् ॥ ३० ॥
स्कन्धेनापि वहेच्छत्रुं यावत्कालस्य पर्ययः ।
तमेव काले सम्प्राप्ते भिन्द्याद्घटमिवाश्मनि ॥ ३१ ॥
धर्मो नियोगयोग्यार्थं नतो राजनयो गुणाः ।
यशश्चैव तथा स्वर्गं पुष्कलश्च धनागमः ॥ ३२ ॥
नियोज्य मूर्खं कार्ये च राज्ञो दोषास्त्रयस्तथा ।
अयशश्चार्थनाशश्च नरके पतनं तथा ॥ ३३ ॥
यत्किञ्चित् कुरुते भृत्यः शुभं वा यदि वाऽशुभम् ।
सुकृतं वर्द्धते तेन राजा दुष्कृतमेव च ॥ ३४ ॥
अनभ्यासस्य कार्याणि सिद्धिं नायान्ति कानिचित् ।
अभ्यासात्सर्वकार्येषु प्रथाया भवते क्षमी ॥ ३५ ॥
गुणवन्तं नियुञ्जीत गुणहीनं विवर्जयेत् ।
पण्डितेषु गुणाः सर्वे मूर्खे दोषाश्च केवलाः ॥ ३६ ॥
सद्भिरासीत सततं सद्भिः कुर्वीत सङ्गतिम् ।
सद्भिर्विवादं मैत्रीं च नासद्भिः किञ्चिदाचरेत् ॥ ३७ ॥

अकुत्सिते कर्म्मणि यः प्रवर्त्तते,
निवृत्तरागस्य गृहं तपोवनम् ॥ ४७ ॥
वरं विन्ध्याटव्यामनशनतृषार्त्तस्य मरणम्,
वरं सर्पाकीर्णे तृणपिहितकूपे निपतनम् ।
वरं भ्रान्तावर्त्ते गहनजलमध्ये विलयनम्,
न शीलस्य भ्रंशो विपुलचरितस्य श्रुतवतः ॥ ४८ ॥

इति चाणक्य-राजनीति-शास्त्रे
पञ्चमोऽध्यायः ॥५॥

## षष्ठोऽध्यायः ।

दातव्यं दानमनिशं माऽभुवन् कृपणा जनाः ।
भाग्यक्षयेन क्षीयन्ते नोपभोगेन सम्पदः ॥ १ ॥
कृपणस्य समो दाता न भूतो न भविष्यति ।
अस्पृशन्नेव वित्तानि परेभ्यो यः प्रयच्छति ॥ २ ॥
चला विभूतिः क्षणभङ्गि यौवनम्,
कृतान्तदन्तान्तरवर्त्ति-जीवनम् ।
तथाप्यवज्ञा परलोकसाधने-
ष्वहो नृणां विस्मयकारि-चेष्टितम् ॥ ३ ॥
अर्थाः पादरजः समा गिरि-नदीवेगोपमं यौवनम्,
मानुष्यं जललोल-बिन्दुचपलं फेनोपमं जीवनम् ।

धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनम्,
पश्चात्तापहतो जरा परिगतः शोकाग्निना दह्यते ॥ ४ ॥
देहि देहीति वदतो देहि देहीति याचतः ।
एकमेव वचस्तत्र कियती भाग्यफलस्तुता ॥ ५ ॥
न प्रदानैः क्षयं यान्ति नोपभोगैश्च सम्पदः ।
पूर्वार्जितानामन्यत्र सुकृतानां क्षयं विना ॥ ६ ॥
भाग्यवान् जायतां पुत्रो माशूरो मा च पण्डितः ।
शूराश्च कृतविद्याश्च वने सीदन्ति मत्सुताः ॥ ७ ॥
एते पाण्डुसुताः क्षितिपतितनया भीमसेनार्जुनाद्याः,
शूराः सत्यप्रतिज्ञा दिनकरवचयः केशवेनोपगूढाः ।
ते दृष्टा पालहस्ता जगति क्षपणवत् भैक्षचर्यामुपाताः,
कः शक्तो भालपट्टे विधिकर-लिखिताक्षरं मेखलां प्रमार्ष्टुम् ॥८॥

क्रुद्धोऽपि कः कस्य करोति दोषम्,
तुष्टोऽपि कः कस्य गुणं करोति ।
स्वकर्म-सूत्रैर्ग्रथिताहि सर्वे,
कर्त्ता करोतीति वृथाभिमानः ॥ ८ ॥
यन्मनोवचनतैरगोचरम्,
यत्स्पृशन्ति न गिरः कवेरपि ।
स्वप्नवृत्तिरपि यत्र दुर्लभा,
हेलयैव विदधाति तद्विधिः ॥ १० ॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे,
विष्णुर्येन दशावतार निचये क्षिप्तो महान् सङ्कटे ।
रुद्रो येन पिनाक पाणिरनिशं भिक्षाचरः कल्पितः,
सूर्यो भ्राम्यति यद्वशेन गगने तस्मै नमः कर्मणे ॥ ११ ॥

दाता बलिर्याचनको मुरारिः,
दानं महीराशि मखस्य मध्ये ।
दातुः फलं बन्धनमेव दृष्टम्,
नमोऽस्तु दैवाय यथेष्टकर्त्रे ॥ १२ ॥

माता यदि भवेल्लक्ष्मीः पिता यदि जनार्दनः ।
नार्थसम्प्रतिपत्तिः स्याद्विना प्राक् पुण्यकर्मणा ॥ १३ ॥

प्राप्तोऽमात्या विपर्यस्ते सुहृदः सह बन्धुभिः ।
सुकृतं दुष्कृतं चापि गच्छन्तमनु गच्छति ॥ १४ ॥

उपवर्द्धितयोर्नास्ति सम्बन्धः प्राणकाययोः ।
पुत्रमित्रकलत्रेषु सम्बन्धेषु कथैव का ? ॥ १५ ॥

नो तत्र कश्चिदनुयाति सुहृद्बन्धुः,
अर्थः प्रयत्न निचितो न च भृत्यवर्गः ।
यस्मिन् पथे प्रियवतानि विहाय पुंसाम्,
प्राणाः स्वकर्म फलभोग-धनाः प्रयान्ति ॥ १६ ॥

लब्ध्वा जन्म सहयिता स्वयमपि त्रैलोक्यभूषाकरः,
क्षिप्त्वर्थं श्रितिकण्ठमप्युपगतस्तेनापि मूर्द्ध्नि धृतः ।
पूर्णः शीतकरस्तथापि जरति क्षीणः परं प्रत्यहम्,
प्रायः शास्त्रकर्त्ता एव बलवत्कस्योपकुर्वीत कः ?॥ १७ ॥

उत्पतन्त्वन्तरीक्षं वा पातालं प्रविशन्तु वा ।
चरन्तु च दिशः सर्वा अदत्तं नोपलभ्यते ॥ १८ ॥

दुर्गं त्रिकूटः परिखा समुद्रो-
रक्षांसि योधा धनदश्च भ्राता ।
सञ्जीवनी यस्य मुखाग्र विद्या,
स रावणः कालवशाद्विपन्नः ॥ १९ ॥

नैवान्तरीक्षे न समुद्र मध्ये,
न पर्वतानां विवर प्रदेशे।
भोक्ता स्वदेशे भुवि किञ्चिदस्ति,
यत्र स्थितं कर्म न बाधते स्वम् ॥ २० ॥

नमस्यामोदेवाननुहतविधेस्तेऽपि वशगा,
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः।
फलं कर्मायत्तं किममरगणैः किंच विधिना,
नमः सत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ २१ ॥

पुराधीता च या विद्या पुरा दत्तं च यद्धनम्।
पुराकृतं च यत्कर्म अग्रे धावति धावति ॥ २२ ॥

भवितव्यं भवत्येव कर्मणामेव निश्चयः।
अभाव्यं न भवत्येव चित्ते किं क्रियते त्वया[1] ॥ २३ ॥

आगमिष्यन्ति ते भावा ये भावा मयि भाविनः।
मया तैरनुगन्तव्यं न तेषामन्यतो गतिः ॥ २४ ॥

अघटित घटनां नयति भुवम्,
सुघटित चयभङ्गुरचापलम्।
जगदिदं कुरुते सचराचरम्,
विधिरहो बलवानिति मे मतिः ॥ २५ ॥

शशिदिवाकरयोर्ग्रहपीडनम्,
गजभुजङ्गमयोरपि बन्धनम्।
मतिमतां च विलोक्य दरिद्रताम्,
विधिरहो बलवानिति मे मतिः ॥ २६ ॥

स एवायं पार्थस्तदपि वरमध्यं धनुरिदम्,
तदेवाभीराणां प्रमथितमुरारातिपृतना।

समस्ता हरिणीनां कुलधरमुखानां युवतयो-
ह्रियन्ते गोपालैर्विधिरथबलीयान्पुरुषः ॥ २७ ॥

इयं कटीमत्तगजेन्द्रगामिनी,
विचित्रविद्यासनसंस्थिता सदा ।
अनेकरामाजनलालिता परम्,
विधेर्वशात्सैकपतो प्रजार्थिनी ॥ २८ ॥

सहस्रे पुरुषत्वेऽपि करपादौ शिरोदरे ।
एकः प्रभुःपयोदाता इति दैव विजृम्भितम् ॥ २९ ॥

कर्माण्येव प्रधानानि न भवन्ति नरा यथाः ।
वसिष्ठदत्तलग्नापि जानकी दुःखभागिनी ॥ ३० ॥

न पितुः कर्मणा पुत्रो न पितापुत्रकर्मणा ।
स्वकृतेनैव सम्पत्ति विपत्ति चोपभुञ्जते ॥ ३१ ॥

कर्मणा प्रभवन्त्येव यथाकालमुपद्रवाः ।
एतत्तु कष्टं यज्जन्तुः कर्ताहमिति मन्यते ॥ ३२ ॥

अतिविस्तृतमपि विज्ञेन विदेशस्थोऽपि मानवः ।
स्वकर्मोत्पातवातेन नीयते यत्र तत्फलम् ॥ ३३ ॥

कर्मणा तत्प्रकारेण मनुष्यो यत्र पूजितः ।
वासनारज्जुमाकृष्य सर्वकर्मसु चोदितः ॥ ३४ ॥

प्राप्तव्यमर्थं लभते मनुष्यो,
देवोऽपि तं वारयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे,
यदस्मदीयं न हि तत्परेषाम् ॥ ३५ ॥

वने रणे शत्रुजलाग्निमध्ये,
महार्णवे पर्वतमस्तके वा ।

सुप्तं प्रमत्तं विषमस्थितं वा,
रक्षन्ति कर्माणि पुराकृतानि ॥ ३६ ॥

न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति धिया संयोजयन्ति तम् ॥ ३७ ॥

धर्मार्थेनोत्सृजेदर्थं न धर्मं त्वर्थकारणात् ।
इहैव हि त्यजत्यर्थो धर्मोऽमुत्रापि तिष्ठति ॥ ३८ ॥

धर्मार्थी यानि कष्टानि सहते कृपणो जनः ।
तान्येव यदि धर्मार्थी न पुनः क्लेशभाग्भवेत् ॥ ३९ ॥

सर्वेषामेव शौचानामर्थशौचं प्रशस्यते ।
योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥ ४० ॥

सर्वभूतदया शौचं शौचमिन्द्रियनिग्रहः ।
सत्यं शौचं मनःशौचं जलशौचन्तु पञ्चमम् ॥ ४१ ॥

न चत्वारसहस्रेण नोदकुम्भशतेन च ।
पञ्चगव्यघटैर्वापि भावदुष्टो न शुध्यति ॥ ४२ ॥

प्रसन्नचित्तः स्वयमेव तुष्यति,
प्रभुः प्रियवाग्दलप्रपूजनात् ।
न कोटिसौवर्णकुबेरयार्पणात्,
पराङ्बुद्धिः शरदां शतैरपि ॥ ४३ ॥

न काष्ठे विद्यते देवो न पाषाणे न मृण्मये ।
भावेषु विद्यते देवस्तस्माद्भावो हि कारणम् ॥ ४४ ॥

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ ४५ ॥

न प्रहृष्यति सम्मानेर्नावमानैः प्रकुप्यति ।
गाङ्गोदकमिवाक्षोभ्यो यः स पण्डित उच्यते ॥ ४६ ॥

दरिद्रस्य मनुष्यस्य प्राज्ञस्यायति-दर्शिनः।
क्लिष्टमप्युचितं वाक्यमवलिप्तैर्न श्रूयते ॥ ४७ ॥
क्वचिद्भूमौ शेते क्वचिदपि च पर्यङ्कशयने,
क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः।
क्वचित्कन्थाधारी क्वचिदपि विचित्राम्बरधरः,
मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम् ॥ ४८ ॥
जिह्वे! वदसि किंचेदं मधुरं किं न भाषसे।
मधुरं वद कल्याणि! लोकोऽयं मधुरप्रियः ॥ ४९ ॥
किं किं नोपकृतं तेन किं न दत्तं महात्मना।
प्रियं प्रणयकोपेन प्रथमं येन भाषितम् ॥ ५०
बाल्ये वयसि यः शान्तः स शान्त इति कथ्यते।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥ ५१ ॥
मास एवापरेऽपक्षेऽसमिद्धं खलु जीवितम्।
फलानामिव पक्वानां प्रपतनतोभयम् ॥ ५२ ॥
प्राप्य धर्मस्य माहात्म्यं क्रियमाणस्य नित्यशः।
धार्मिकः कुर्वन् श्रेयो लोकस्य भवति प्रियः ॥ ५३ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ५४ ॥
न मन्त्रेण न वीर्येण न धिया पौरुषेण च।
अलभ्यं लभते जन्तुस्तत्र का परिदेवना ॥ ५५ ॥
सम्भूतः पञ्चधा कायो यदि पञ्चत्वमाप्नुयात्।
कर्मभिः स्वकचरितैस्तत्र का परिदेवना ॥ ५६ ॥
यौवनं जरयाग्रस्तमारोग्यं व्याधिपीडितम्।
मृत्युर्ग्रसति भूतानि किं धीर इव भाषसे? ॥ ५७ ॥

इच्छन्ति केचिन्नरकेषु वासम्,
नेच्छन्ति, केचिन्नरकेषु वासम् ।
श्रेयो हि तस्मान्नरकं विशिष्टम्,
न गर्भवासात्परमं हि दुःखम् ॥ ५८ ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ५९ ॥

एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यद्येकस्त्वरितं याति तत्र का परिदेवना ॥ ६० ॥

एकविंशतिर्निर्दिष्टा नरकाः शास्त्रपारगैः ।
गर्भवास-समीपे ते कलां नार्हन्ति षोडशीम् ॥ ६१ ॥

शीतमुष्णं क्षुधा तृष्णा गर्भवासेषु दारुणाः ।
गर्भवासादृते नान्यत्कष्टात्कष्टतरं भवेत् ॥ ६२ ॥

कामः क्रोधस्तथा लोभो देहे तिष्ठन्ति तस्कराः ।
ते मुष्णन्ति जगत्सर्वं तस्माज्जाग्रत जाग्रत ॥ ६३ ॥

यो हि मानुष्यमासाद्य कर्मभूमिं सुदुर्लभाम् ।
न करोत्यात्मनः श्रेयः स पश्चात्परितप्यते ॥ ६४ ॥

मातुर्गर्भपरिभ्रष्टो मग्नः संसारसागरे ।
दुःखेन लभते जन्म मानुष्ये च पुनः पुनः ॥ ६५ ॥

एकवृक्षे यथा रात्रौ नानापक्षि-समागमः ।
प्रातर्दशदिशो यान्ति तद्वद्भूत-समागमः ॥ ६६ ॥

दुःखं परं बालकचेष्टितञ्च,
मध्ये हि कामं जरया निरस्तम् ।
एतानि दुःखानि बहूनि लोके,
विचार्य संपश्य न किञ्चिदिष्टम् ॥ ६७ ॥

दृष्टा बालकचेष्टा यौवनदर्पोऽप्य हृदवैराग्यम् ।
साऽपि गता सोऽपि गतस्तदपि गत स्वप्नमावेयम् ॥ ६८ ॥
अहो भार्या अहो पुत्र अहो आशा अहो सुखम् ।।
अहो माता अहो भ्राता पश्य मायाविमोहितम् । ॥ ६९ ॥
कस्य माता कस्य पिता कस्य बन्धुर्मनोमुने ।
विभ्रमय च्युतिभ्रमात्तेन मुह्यन्ति जन्तव ॥ ७० ॥

अर्थं धिगस्तु बहुवैरिकर नराणाम्,
राज्य धिगस्तु मयद बहुचिन्तनीयम् ।
स्वर्गं धिगस्तु पुनरागमनप्रवृत्तिम्,
धिग् धिक शरीरमपि रोग समाश्रयच ॥ ७१ ॥
बीज पिता क्षेत्रमहो जनित्री,
वर्णानि कर्माणि शुभाशुभानि ।
भूतानि पञ्च प्रतिमानि लोके,
जातानि यातानि च तानि तानि ॥ ७२ ॥

आभूमादिनिवर्तन्ते सुहृदो बान्धवैः सह ।
येन ते सह गन्तव्य तत्कर्म सुकृत कुरु ॥ ७३ ॥
गृहादर्था निवर्तन्ते श्मशानान्मित्रबान्धवाः ।
येन त्वया सह गन्तव्य तत्कर्म सुकृत कुरु ॥ ७४ ॥
अज्ञानवरपङ्केन प्रसुप्तो नरगर्दभ. ।
कः समर्थः प्रबोद्धु त प्राणमेरोरातैरपि ॥ ७५ ॥
मनोरथ पिता नित्य धृतिर्माता स्तुति॰ सखा ।
व्यवसायश्च मे भ्राता इत्येते मम बान्धवा. ॥ ७६ ॥
प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासयोः ।
ततः कामेन बाध्यन्ते निद्रया निशि जन्तव. ॥ ७७ ॥

पुरन्दरसहस्राणि चक्रवर्त्तिशतानि च ।
प्रवापितानि कालेन प्रदीप इव वायुना ॥ ७८ ॥
अज्ञानेनावृतो लोको लोभेन च वशीकृत ।
धर्मेण बहुभिर्नष्ट तेन स्वर्गं न गच्छति ॥ ७९ ॥
गृहेऽप्यर्थान् परित्याज्य श्मशाने मित्रबान्धवान् ।
नग्नश्च रिक्तहस्तश्च प्रयाति भूपितो यथा ॥ ८० ॥
जरा व्याधिश्च मृत्युश्च यदि न स्यादिह ध्रुवम् ।
तदा संसारभोगेऽस्मिन् काम राजतु मे मन ॥ ८१ ॥
पक्षीन्द्रान् पातालादियमिव निमज्ज्योद्धरति य,
य आकाशं स्वर्गं क्षयमयति येन्द्रान् सुरगणान् ।
मही व्याप्ता व्याप्ता दशु सततया येन विजिता,
स मृत्यु काल न समत इति साक्षाद्दैमनसि ॥ ८२ ॥
न कामेषु खेदं गच्छति न सरस्वादरनयम्,
न दाक्षिण्यच्छाया युवतिषु न शास्त्रेषु च वथा ।
य एव निष्कामा नवयहृदय पौनकठिन,
स मृत्यु काल न समत इति साक्षाद्दैमनसि ॥ ८३ ॥
परिहर मनसा सुवर्णचिन्ताम्,
कुरु हरिपूजनमेव सारम् ।
यम भटवरपतिताभा नराणाम्,
भवति न हैमगते चष विमुक्ति ॥ ८४ ॥
माया मो निर्ममस्यापि व्यासस्य च महामुनी ।
प्रवेशे प्रत्ययो नास्ति प्रासरागमनं कुत ? ॥ ८५ ॥
गृहे ! वद कस्मास चेमधाम चषे चषे ।
-हिमियांति नि माला विषाद का निवर्तते ॥ ८६ ॥

न प्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ८७ ॥
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव प्राप्नोति दुःखानि च सुखानि च ॥ ८८ ॥
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ ८९ ॥
अनोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वयं स्वकाले यच्छन्ते तथा कर्माणि देहिनाम् ॥ ९० ॥
नैवाकृतिः फलति नैव कुलं न शीलम्
विद्या बहुलगुणिताऽपि न वाग्विशुद्धि ।
भाग्यानि पूर्वतपसा खलु सञ्चितानि,
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९१ ॥
न भवेद्दुर्विपाकोऽपि प्राण (णा) य समय विना ।
सहस्रमप्यसृग् हन्ति जन्तो प्राप्तावधे पुन ॥ ९२ ॥
विद्या कुलेन विपुलेन गुणेन तेजो
शौर्येण कार्यमिह नास्ति न च श्रुतेन ।
कर्माणि पूर्वलिखितानि फलन्ति काले,
दैवेन यानि लिखितानि ललाटपट्टे ॥ ९३ ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुविन्दति ॥ ९४ ॥
खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ ९५ ॥
पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् ।
विचार्य खलु पश्यामि पानीयं निर्भयं सुखम् ॥ ९६ ॥

पथि न्यस्तं क्वापि करजदशनैर्भिन्नयुगलम्,
पन्थाः कष्टावृत्तिर्जगति गणिकानां बहुभया ॥ १६ ॥
क्वचिच्च यदि शब्दशास्त्रकुशलो विप्रो भवेत्पण्डितः,
क्वचिच्च यदि दण्डनीतिनिपुणो राजा भवेद्धार्म्मिकः ।
क्वचिच्च यदि रूपयौवनवती साध्वी भवेदङ्गना,
क्वचिच्च यदि निर्धनोऽपि पुरुषः पापं न कुर्य्यात्क्वचित् ॥१७॥
नात्मच्छिद्रं परे दद्यात्परच्छिद्राणि लक्षयेत् ।
गूहेत्कूर्म इवाङ्गानि परभावं परीक्षयेत् ॥ १८ ॥
पातालतलवासी च वारिधाकार निःसृत
यदि न स्यादुरोदेशे विषं केनोपलभ्यते ॥ १९ ॥
गहुणोयो हि नीमिषे । विश्वस्तोऽपि विभीषणः ।
यस्य न स्वजनप्रीति कृतस्तस्य परे जने ॥ २० ॥
न तथा बाधते शत्रुः कृतवैरोऽपि राघव ।
यथा भिनत्ति मर्म्माणि तीक्ष्णं स्वजनभयात्पदः ॥ २१ ॥
न तावदन्यजातीयश्छिनत्ति परशुस्तरुम् ।
यावत्स्वजातीय हन्ता तत्र निबध्यते ॥ २२ ॥
कोकिलानां स्वरो रूपं सन्ध्यारूपं कुलस्त्रियः ।
विद्याया पटुतारूपं रूपं मूर्खस्य मौनता ॥ २३ ॥
कोकिलस्य स्वरो रूपं नारीरूपं पतिव्रतम् ।
विद्यारूपं कुरूपाणां क्षमारूपं तपस्विनाम् ॥ २४ ॥
न विश्वसेदमित्रस्य मित्रस्यापि न विश्वसेत् ।
कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ॥ २५ ॥
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ २६ ॥

पठनाय तपस्वी च शूरश्चाप्युद्धमश्रयः ।
मध्यमा स्त्रीघतो चेति राजन् न वृद्धमाप्यहम् ॥ २७ ॥

शाठ्येन मित्रं कपटेन धर्मम्
परोपतापेन समृद्धिभावम् ।
सुखेन विद्यां परुषेण नारीम्
वाञ्छन्ति ये नूनमपण्डितास्ते ॥ २८ ॥

तुल्यतनञ्जभासु ध्यानादाय मङ्क्ष्यति ।
अतस्तत्प्राप्तये कुर्याज्जीवोषितडाङ्गुलिध्वनीन् ॥ २९ ॥

न विश्वसेत्पूर्वपराजितस्य
शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहां पश्य उलूकपूर्णाम्,
काक प्रणीतेन हुताशनेन ॥ ३० ॥

वृद्धा स्त्रियं नव मद्यं शुष्कमांसादमूलकम् ।
रात्रौ चापि दिवास्वप्नं विषवत्परिवर्जयेत् ॥ ३१ ॥

विषं वेश्म दरिद्रस्य वृद्धस्य तरुणी विषम् ।
अशिक्षिता विषं विद्याऽप्यजीर्णे भोजनं विषम् ॥ ३२ ॥

प्रियं गीतमवसरस्य वृद्धस्य तरुणी प्रिया ।
प्रियं दानं दरिद्रस्य लोभस्योपायनं प्रियम् ॥ ३३ ॥

बालातपः पर्वणि मैथुनञ्च,
श्मशानधूमो मठभोजनञ्च ।
रजस्वलावक्त्रनिरीक्षणञ्च,
सद्योऽप्यथायुरभिद्रवन्ति ॥ ३४ ॥

शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ३५ ॥

रूपोद्योतकर रिपुप्रमथन कामाग्निसन्दीपनम्,
नारीणाञ्च मनोहर श्रमहर घ्राणे दशैत गुणा ॥ ४५ ॥
ताम्बूल कटुतिक्तमिष्टमधुर क्षारं कषायान्वितम्,
पित्तघ्न कफनाशन कृमिहर दुर्गन्धिनिनाशनम् ।
वक्त्रस्याभरण विशुद्धिकरण कामाग्निसन्दीपनम्,
ताम्बूलस्य सखे। त्रयोदशगुणा स्वर्गेऽपि तद्दुर्लभम ॥ ४६ ॥

काम प्रदीपयति रूपमभिव्यनक्ति,
सौभाग्यमावहति वक्त्रसुगन्धिताञ्च ।
ओज करोति कफजाश्च निहन्ति रोगान्,
ताम्बूलमेवमपरांश्च गुणान् करोति ॥ ४७ ॥
शिर सुधौत वसनौ सुनिर्मलौ,
वराङ्गनासेवनमन्नभोजनम् ।
धनस्य स्थायित्वमपर्व्वमैथुनम,
चिरप्रणष्टां श्रियमानयन्ति षट ॥ ४८ ॥

येन केन हि पुष्प च पाण्डुरेण विशेषत ।
शिरसा धार्यमाणेन अलक्ष्मी प्रतिहन्यते ॥ ४९ ॥
दीपस्य पश्चिमच्छाया छायाशय्यासनस्य च ।
रजकस्य च यत्तीर्थमलक्ष्मीस्तत्र तिष्ठति ॥ ५० ॥
गजाश्वरथधान्याना गवामपि रज शुभम ।
अशुभन्तु विजानीयात्खरोष्ट्र महिषीरज ॥ ५१ ॥
गवा रजो धान्यरज पुत्रस्याङ्गगत रज ।
रजांस्येतानि पुण्यानि पापमेभि प्रणश्यति ॥ ५२ ॥
खराविमर्कभाण्डाना मार्जारमूषिकस्य च ।
रजांस्येतानि पापानि सर्वत परिवर्जयेत् ॥ ५३ ॥

गूर्णवात नवायाम्बु यानवस्त्र-धृतोदकम् ।
शिवनिर्माल्यकेयाम्बु पुण्य घ्नन्ति पुराकृतम् ॥ ५४ ॥
वैरिणा सह सन्धाय विश्वस्तो यः स्वपेत् स्वयम् ।
स वृक्षाग्रे प्रसुप्तः पतितः प्रतिबुध्यते ॥ ५५ ॥

य एव राजन् । मृदुमन्दभावो,
स एव दूरात्परिवर्जनीयः ।
मध्याह्निमुख्यस्य दिवाकरस्य,
मरीचयस्तीव्रतरा भवन्ति ॥ ५६ ॥

मृदुनैव मृदुं हन्ति मृदुना हन्तिदारुणम् ।
नासाध्यं मृदुना किञ्चित्तस्मात्तीक्ष्णतरो मृदुः ॥ ५७ ॥
क्षमावलमशक्तानां शक्तानां भूषणं क्षमा ।
क्षमावशीकृतो लोकः क्षमया किं न साध्यते ? ॥ ५८ ॥
नात्यन्तसरलैर्भाव्य गत्वा पश्य वनं स्थलम् ।
छिद्यन्ते सरलास्तत्र कुब्जा तिष्ठन्ति पदे पदे ॥ ५९ ॥
सुत् आगमप्राणेषु नयवस्त्रादि सङ्गमे ।
मन्त्रप्रज्ञमाद्रग्यमुपेयात विचक्षणः ॥ ६० ॥

विपदि धैर्यमथाभ्युदये क्षमा,
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ,
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ६१ ॥

गजतुरगशतैः प्रयान्तु मूर्खाः,
धनहीना विबुधाः प्रयान्तु पद्भ्याम् ।
गिरिशिखरगतापि काकपङ्क्तिः,
पुलिनगतैर्न समेति राजहंसैः ॥ ६२ ॥

यद्वित्ताढ्याः प्रथितपुरुषाः साधवो वित्तहीनाः,
नाश्चर्यं वचनपटुभिर्निन्दनीया खलश्री ।
वित्तभ्रष्टो गणयति समान् कस्तृणेनापि मूर्खान्,
विद्वांसस्तु प्रकृतिसुभगाः कस्य नाभ्यर्हणीया ? ॥ ६३ ॥

नित्य प्रमुदिता मूर्खा ज्ञानविज्ञानवर्जिता ।
पण्डिता नित्यशोकार्त्ता ज्ञानाद्दुःखवशीकृता. ॥ ६४ ॥
सपापे रमते नारी गिरौ वर्धति वाघव ।
सुखमायाति लक्ष्मी प्राज्ञ प्राचीन निवन ६५ ॥

लक्ष्मीर्लक्षणहीनेऽस्ति ज्ञातिहानि सरस्वती ।
सपाप रमते नारी गिरौ वर्धति वाघव ॥ ६६ ॥

विधि कन्यायुग्म सुगतिरपरा दुर्गतिरभूत्,
तयोराद्या मोहात्कुलगुण विहीनाय स ददौ ।
ततः पश्चात्तापादिव तदनुजा दातुमधुना,
कुलीन विद्वांस वरमिह वरेण्य वरयते ॥ ६७ ॥

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णोऽपि धार्यते ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माऽप्यन्त न गच्छति ॥ ६८ ॥

तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी ।
कोऽयं पुत्रेण जातेन यो न विद्वान् न धार्मिक ? ॥ ६९ ॥

एकेनापि सुपुत्रेण विद्यायुक्तेन साधुना ।
कुलमुद्भासते सर्व चन्द्रेण गगन यथा ॥ ७० ॥

मूषिको गृहजातोऽपि हन्तव्योऽनुपकारक ।
उपप्रदानैर्मार्जारो हितकृत्प्रार्थ्यतेऽन्यत ॥ ७१ ॥

वीणावंशचन्दन चन्द्रभास,
चन्द्राभाषा यौवनस्वारमञ्च ।

नैतद्भवेत् क्षुत्पिपासातुराणाम्,
सर्वारम्भास्तण्डुल प्रस्थमूलाः ॥ ७२ ॥
मत्तः पूर्वं कृतत्यगादवत्यार्थेण सङ्गतिः ।
विपरीतमनार्य्येण यत्क्षमसि तथा कुरु ॥ ७३ ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वनमाभासते सर्वं सुपुत्रेण कुलं यथा ॥ ७४ ॥
वरमेको गुणीपुत्रो निर्गुणेन शतेन किम् ? ।
एकश्चन्द्रस्तमो हन्ति न च तारासहस्रशः ॥ ७५ ॥
केचिन्मृगमुखा व्याघ्राः केचिद्व्याघ्रमुखा मृगाः ।
तत्स्वरूपविपर्य्यस्तादिश्वासोह्यापदां पदम् ॥ ७६ ॥
हिपन्तो पितरो मन्ये पुत्रो याभ्यां न पाठित. ।
न शोभते सभामध्ये हंस मध्ये बकोयथा ॥ ७७ ॥
लालयेत्पञ्चवर्षाणि दशवर्षाणि ताडयेत् ।
षोडशे वत्सरे प्राप्ते पुत्रे मित्रवदाचरेत् ॥ ७८ ॥
जायमानो हरेद्दारान् वर्द्धमानो हरेच्छ्रियम् ।
म्रियमाणो हरेत्प्राणान् नास्ति पुत्रसमो रिपु' ॥ ७९ ॥
पुत्र. स्यादिति दुःखित सतिसुते तस्यामयेर्दुःखितः,
तद्रक्षायनचिन्तयाऽसुखितस्तन्मौर्ख्येतो दु.खितः ।
जीवेदित्यपि दु खितो यदि सुतः प्राणान्तक दु.खित',
पुत्रव्याजमुपागतो रिपुरसौ मा जायता कस्यचित् ॥८०॥
यस्य पुत्रा न विद्वांसो नशूरा न च धार्म्मिकाः ।
सान्धकार कुल तस्य नष्टचन्द्रेव शर्व्वरी ॥ ८१ ॥
निशाया दीपकश्चन्द्र प्रभाते दीपको रवि' ।
पृथिव्या दीपको राजा सुपुत्र. कुलदीपक. ॥ ८२ ॥

एतदेवायुषः सारं निसर्गं ययभक्तिनः ।
स्निग्धे मुग्धे विदग्धे च यदयन्त्रितमास्यते ॥ ८३ ॥
विश्वयादनुजान् सर्वान् ज्येष्ठभ्राता यथा पिता ।
पुत्रवदनुवर्त्तेरन् कनिष्ठा धर्मवत्सलाः ॥ ८४ ॥
सङ्घातः श्रेयसो मूलं ज्ञातकस्य विशेषतः ।
तुषभावे पृथग्भिन्ने तण्डुल न प्ररोहति ॥ ८५ ॥
बहूनामप्यसाराणां समवायो हि दुःसहः ।
तृणैरावेष्टिता रज्जुस्तया हस्त्यपि बध्यते ॥ ८६ ॥
अपहृत्य परस्यार्थं तेन धर्मं करोति यः ।
स दाता नरकं याति यस्यार्थस्तस्य तत्फलम् ॥ ८७ ॥
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
तच्च कुलनाशाय भवेदात्मवधाय च ॥ ८८ ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकान् ॥ ८९ ॥
ब्रह्मघ्ने च सुरापे च स्तेने च गुरुतल्पगे ।
निष्कृतिर्विद्यते राजन् कृतघ्ने नास्ति निष्कृतिः ॥ ९० ॥
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णां वयमेतेषां निष्कृतिं नैव शुश्रुम ॥ ९१ ॥
यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ९२ ॥
अदाता वृत्तिका चैव द्वावेतौ तुलयाधृतौ ।
अदाता मुच्यते कल्यैर्वृत्तिका न तु मुच्यते ॥ ९३ ॥
नाश्नन्ति पितरः पिण्डं नाश्नन्ति हव्यमीयते ।
श्रोत्रियस्य च नाश्नन्ति यस्योपपतयो गृहे ॥ ९४ ॥

मरणायैव जायन्ते म्रियन्ते जननाय पुनः।
न पराभ्युपकाराय प्रजायन्तेऽपरे जनाः ॥ ८५ ॥
तण्डुलाः सर्षपाद् यत्र त्रीहयो यत्र राजवत्।
यत्रात्र भक्ष्यमन्यत्र यत्र ? यत्रान्यदिष्यम् ॥ ८६ ॥
वाजिनो यत्र यत्राहं यत्राहं तत्रवाजिनः।
न ते यत्र न तत्राहं नाहं यत्र न तत्र ते ॥ ८७ ॥

चित्तायत्तं धातुबद्धं शरीरम्,
चित्ते नष्टे धातवो यान्ति नाशम्।
तस्माच्चित्तं सर्वतो रक्षणीयम्,
स्वस्थे चित्ते बुद्धयः सम्भवन्ति ॥ ८८ ॥
चाहारार्थं कर्म कुर्यादनिन्द्यम्,
कुर्यादाहारं प्राणसन्धारणार्थम्।
प्राणा धार्य्यास्तत्वविज्ञानहेतोः,
तत्त्वं ज्ञेयं येन भूयो न जन्म ॥ ८९ ॥

इति चाणक्य-राजनीतिशास्त्रे
सप्तमोऽध्यायः ॥ ७ ॥

—०—

## अष्टमोऽध्यायः।

—:०:—

धर्मः प्रव्रजितस्तपः प्रचलितं सत्यञ्च दूरङ्गतम्,
पृथ्वी मन्दफला जनाः कपटिनो रौद्रे स्थिता ब्राह्मणाः।
राजा दण्डकरो विचाररहितः पुत्राः पितुर्द्वेषिणः,
भार्य्याभर्त्तृविरोधिनी कलियुगे धन्या नरा ये मृताः ॥ १ ॥

देशस्तस्करदूषितो गतघृणो राजा दया दुर्जने
प्रायास्तः स्वजनेषु दुर्नयरतो लोको भयध्वाध्वनि ।
मित्रं छिद्ररतं सुखेष्वसुखता क्रूरेषु च बान्धवाः,
निःस्नेहा वत बन्धनापि तनयं स्वास्थ्य शरीरे कुतः ? ॥ २ ॥
बुद्धिः पौरुषमार्जवं गुणरतिर्विद्याकुलं सेवनम्,
कालेऽस्मिन् विफलत्वमेव सकलं प्रोतत्पुरः स्वामिनाम् ।
यो दोषं कुरुते परस्य सुमहत् चोरस्य यो रक्षको,
स पापद्रुमिपस्य वर्द्धनकरस्तस्या भवेत् प्रियः ॥ ३ ॥
अतिक्रान्तः कालः सुचरितशतामोदसुभगो
गताः श्लाघ्याः नयननिभ सूनावस्तनुताम् ।
परिम्लानं प्रायो बुधजनकथा सारनिपुणो-
निरानन्दं जातं जगदिदमतीतोत्सवमिव ॥ ४ ॥
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ।
परचित्तरतां नारीं पुत्रं व्यसने स्थितम् ॥ ५ ॥
पराश्रं परवस्त्रं च परशय्यां परस्त्रियम् ।
परवादं परद्रव्यं दूरतः परिवर्जयेत् ॥ ६ ॥
स्वाध्यायं स्वपरं च पाण्डित्यं क्रयक्रीतं च मैथुनम् ।
भोजनं च पराधीनं तिस्रः पुंसां विडम्बनाः ॥ ७ ॥
आसनाच्छयनाच्चैव सङ्गत्याच्च भोजनात् ।
पुंसां सङ्क्रमते पापं घटाद्घटमिवोदकम् ॥ ८ ॥
अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असम्भोगश्च नारीणां वस्त्राणामातपो जरा ॥ ९ ॥
दुर्जनाः कलिमिच्छन्ति सन्धिमिच्छन्ति साधवः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ १० ॥

मानो हि मूलमर्थस्य माने म्लाने धनेन किम्।
महतो मानहीनस्य जीवनान्मरणं वरम्॥ ११॥
अतिदानाद्बलिर्बद्धो ह्यतिमानात्सुयोधनः।
अति कामाद्दशग्रीवो ह्यति सर्वत्र गर्हितः॥ १२॥
नाभिषेको न संस्कारः सिंहस्य क्रियते वने।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता॥ १३॥

वणिक् प्रमादी भृतकश्च मानी,
भिक्षुर्विलासी विधनश्च कामी।
वेश्याङ्गना चाप्रियवादिनी च,
प्रजापतेर्दुश्चरितानि पञ्च॥ १४॥
दाता दरिद्रः, कृपणश्च लोभी,
सेव्यः कदर्यः स्तनयोऽविधेयः।
परोपकाराभिरतस्य मृत्युः,
प्रजापतेर्दुश्चरितानि पञ्च॥ १५॥
कान्तावियोगः स्वजनापमानः,
कन्या विमोक्षा स्वजनस्य सेवा।
दरिद्रभावात्प्रविमुक्तमित्रम्,
विनाग्निना पञ्च दहन्ति तीव्रम्॥ १६॥
वन्ध्या सुता वित्तकरीव विद्या,
नारी कथा सज्जन-सङ्गतिश्च।
दुष्टा च भार्या वशवर्त्तिनी च,
दुःखस्य मूलोद्धरणानि पञ्च॥ १७॥
कुरङ्ग-मातङ्ग-पतङ्ग-भृङ्ग-
मीना हताः पञ्चभिरेव पञ्च।

पञ्चः प्रमादी सकाय न बध्यः,
स. सेवते पञ्चभिरेव पञ्च ॥ १८ ॥

विमाननं दुश्चरितानुकीर्त्तनं कथाभिघातो वचनेषु विस्मयः ।
अदृष्टदानं कृतपूर्व्वनाशनं विरक्तभावस्य नरस्य लक्षणम् ॥१८॥

छिद्रं पश्यति सूचितं कथयति चक्षोन वक्त्रं स्मयन्,
भीक्षु नेच्छसि पार्श्वतो विहनुते कर्त्तव्यमन्तर्गतम् ।
दोषान् सम्वृणुते गुणान् कथयती मीयाच्चिते खिद्यते,
शश्वामिव परोक्ष माचरति यत् वैरस्यतल्लक्षणम् ॥ २० ॥

अधीरः कर्कशस्तब्धः कुचेलः स्वयमागतः ।
एते पञ्च न पूज्यन्ते वृहस्पति समा अपि ॥ २१ ॥

पर्वतारोहणे तोये गोकुले यान विप्लवे ।
पतितस्य समुत्थाने षष्ठे. पञ्चगुणा. स्मृता. ॥ २२ ॥

अभ्रच्छाया खलप्रीतिर्वेश्यारागो विभूतयः ।
नदीभुजा प्रवाहश्च पञ्चैते चञ्चला स्मृता ॥ २३ ॥

अजायुद्ध द्विजश्राद्ध प्रभाते मेघडम्बरम् ।
दम्पत्यो. कलहश्चैव पश्चमेव भविष्यति ॥ २४ ॥

अस्थिरं जीवितं लोके यौवनं धनमस्थिरम् ।
अस्थिर पुत्र दारादि धर्म्म कीर्त्तिर्द्वयं स्थिरम् ॥ २५ ॥

दानमर्थोहृतं शास्त्रात्कीर्त्तिर्धर्मौ च चेतसः ।
देहात्परोपकारश्च संसारात्सारमुद्धरेत् ॥ २६ ॥

मृतं जीवितं मत्स्यस्य रविस्तस्यार्कवारिधौ ।
व्याधियोग जरायासैरर्द्धन्तदपि निष्फलम् ॥ २७ ॥

आयुर्वर्षशतं नृणां परिमितं रात्र्या तदर्द्धं हृतम्,
तस्यार्द्धस्य च किञ्चिदेव जरया बाल्येन किञ्चिद् हृतम् ।

किञ्चिद्राधिवियोगदुःखमरणैर्भूपालसेवादिभिः,
नष्टं शिष्टमतस्तरङ्गतरलैः कुर्या सुख क्व चये ? ॥ २८ ॥

भक्ति हित-विचार शून्यबुद्धेः,
श्रुति समयैर्बहुभिर्बहिष्कृतस्य ।
उदर भरणमात्रे केवलेच्छो
र्मनुजपशोः पशोश्च को विशेष. ? ॥ २९ ॥

आहार निद्रा भयमैथुनञ्च,
सामान्यमेतत्पशुभिर्नराणाम् ।
एको विशेष इ्लधिको मनुष्ये,
तेनैव हीनः पशुभिः समःस्यात् ॥ ३० ॥

गच्छतस्तिष्ठतोवापि जाग्रतः स्वपतोऽपि वा ।
यत्र भूतहितार्थाय तत्पशोरिव चेष्टितम् ॥ ३१ ॥
नोपकाराय सुहृदा नापकाराय वैरिणाम् ।
जननीगर्भभाराय मूढाना जन्म केवलम् ॥ ३२ ॥

पूर्व्वं येर्नकृत सुतीर्थं नवन विप्राय सन्तर्पिता,
हव्य नैव हुत हुताशनमुखे नाराधित शङ्कर ।
दत्त नैव हिरण्यमन्न वसन गावस्थिता मेदिनी,
ते तिष्ठन्ति कुचेलभक्त विधना नित्यं सदा दुःखिताः ॥३३॥

नोपात्तं द्रविण कुल नगणित मित्र नचोपार्जितम्,
शास्त्र नाधिगत तपो न चरित न कोहित वाजिभि. ।
कान्ताकोमलपल्लवाधररस पीत न चन्द्रोदये,
तारुण्यङ्गतमेव निष्फलतया शून्यालयेदीपवत् ॥ ३४ ॥

सजातीयेन जातेन यातिवंश समुन्नतिम् ।
परिवर्त्तिनि संसारे परैर्जातैर्मृतैश्च किम् ? ॥ ३५ ॥

दाने तपसि शौर्य्ये वा यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ ३६ ॥
यस्य त्रिवर्गशून्यानि दिनानि यान्ति देहिनः ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ३७ ॥
यज्जीवति क्षणमपि प्रथितं मनुष्यै,
विज्ञान विक्रम यशोऽभिरभज्यमानम् ।
तन्नाम जीवितमिह प्रवदन्ति सन्तः,
काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते ॥ ३८ ॥
धन धर्मश्च विद्या च रूप शीलकुलन्तथा ।
सुखमायुर्गुणश्चैव नवसाध्यानि यत्नतः ॥ ३९ ॥
प्रमत्तस्य वणिग् मूल शाखा तस्य पराङ्गना ।
कामस्तस्य पुष्पाणि फलानि द्यूत कारकः ॥ ४० ॥
यथा यथाहि पुरुषः कल्याणे कुरुते मतिम् ।
तथा तथास्य सर्वार्थाः सिध्यन्ति नात्र संशयः ॥ ४१ ॥
मङ्गलाच्छ्रीः प्रभवति प्रागल्भ्यात्सम्प्रवर्द्धते ।
तद्रूपा कुरुते मूल संयमात् स्थैर्यमश्नुते ॥ ४२ ॥
तावद्भयाद्धि भेतव्यं यावद्भयमनागतम् ।
आगतन्तु भयं दृष्ट्वा प्रहर्त्तव्यमभीतवत् ॥ ४३ ॥
आयत्या गुणदोषज्ञ स्तदात्वे क्षिप्रनिश्चयः ।
अतीत कार्य्यशेषज्ञ शत्रुभिर्नाभिभूयते ॥ ४४ ॥
नोपेक्षितव्यो विद्वद्भि शत्रुरल्पबलोऽपि सन् ।
वह्निरल्पोऽपि संवृद्ध भस्मसात्कुरुते वनम् ॥ ४५ ॥
ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च ।
पुन पुन प्रवर्द्धन्ते तस्मान्नि शेषमाचरेत् ॥ ४६ ॥

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते आततायिनः ॥ ४७ ॥
आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ ४८ ॥
नाततायि वधे दोषो हन्तुर्भवति कश्चन ।
कृते प्रति कृतं कुर्याद् हिंसिते प्रति हिंसितम् ॥ ४९ ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्ज्जयेत् कुटिलं बन्धुं विषकुम्भं पयोमुखम् ॥ ५० ॥

तद्भोजनं यद् द्विज भुक्त शेषम्,
स बुद्धिमान् यो न करोति पापम् ।
स वै सुहृद् यो न घटेत्परोक्षम्
दम्भं विना यत्क्रियते स धर्म्मः ॥ ५१ ॥

क्लिष्टं वृथा यत्तपसा न तीर्थे,
दत्तं वृथा यत् क्षुधिते न पात्रे ।
भुक्तं वृथा नो रुचिरं न पथ्यम्,
मृत्युर्वृथा यद् न रणे न तीर्थे ॥ ५२ ॥

पृष्ठतोऽर्कं निषेवेत जठरेण हुताशनम् ।
स्वामिनं सर्व्वभावेन परलोकममायया ॥ ५३ ॥

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्म्मम् ।
धर्म्मः स नो यत्र न सत्यमस्ति,
सत्यं न तद् यच्छलदोषयुक्तम् ॥ ५४ ॥

तत्सत्कुलं यत्र मनः प्रसन्नम्,
तज्जीवनं यत्र परोपकारः ।

तदर्जितं यद्द्विजभुक्तशेषम्,
तदर्जितं यत्समरे नियुक्तम् ॥ ५५ ॥

तज्ज्ञानं यदगर्वितं स पुरुषो यः खिद्यते नेन्द्रियै-
स्तद्दानं यदकत्थनं सविभवो यः साधु साधारणः ।
सा मैत्री न मदं करोति स सुखी यो नैव तृष्णया,
तन्मित्रं यदयन्त्रितं स उदयो लोकोपकाराय यत् ॥ ५६ ॥

यत्र मित्रैरनन्तसुखं यत्र विश्वासभाजनम् ।
यत्र मित्रेण सर्वेषं रिपुत्वं तत्र सौहृदम् ॥ ५७ ॥

आचारो ग्रामवासान्तो गृहान्ता प्रभुताम्बिका ।
नृपश्रीर्ब्राह्मणान्ता पतनान्तं बलं वशम् ॥ ५८ ॥

सर्वे क्षयान्ता निचया पतनान्ता समुच्छ्रया ।
संयोगा विप्रयोगान्ता मरणान्तञ्च जीवितम् ॥ ५९ ॥

यशो नश्यत्यसत्येन तथ क्रोधेन नश्यति ।
आयुर्विप्रावमानेन दानञ्च परिकीर्तनात् ॥ ६० ॥

गतश्रीर्गणकान् द्वेष्टि गतायुश्च चिकित्सकान् ।
गतायुश्च गतश्रीश्च ब्राह्मणान् द्वेष्टि भारत ॥ ६१ ॥

यदीच्छेत्पुनरागन्तुं नातिदूरमनुव्रजेत् ।
उदकान्तान्निवर्तेत स्निग्धच्छायाश्च पादपात् ॥ ६२ ॥

अनायका विनश्यन्ति नश्यन्ति बहुनायका ।
स्त्रीनायका विनश्यन्ति नश्यन्ति शिशुनायका ॥ ६३ ॥

अर्थातुराणां न सुहृन्न बन्धु
कामातुराणां न भयं न लज्जा ।
विद्यातुराणां न सुखं न निद्रा
क्षुधातुराणां न वपुर्न तेजः ॥ ६४ ॥

कुतो निद्रा दरिद्रस्य परप्रेष्यकरस्य च ।
परनारी-प्रसक्तस्य परद्रव्य-हरस्य च ॥ ६५ ॥

सुखं स्वपिति निश्चिन्तः प्रसारितपदद्वयः ।
मानभङ्गकरी कन्या कुले यस्य न जायते ॥ ६६ ॥

स्थिरः सुहृद् भृत्य जनोऽनुकूलः,
स्वामी गुणज्ञः सुस्थितश्च देशः ।
पत्नी सती यस्य कुले न कन्या,
प्रसार्य पादौ स सुखेन शेते ॥ ६७ ॥

स्थानभ्रष्टा न पूज्यन्ते दन्ताः केशा नखा नराः ।
स्थानस्थिताश्च शोभन्ते पवित्रत्वं भजन्ति वै ॥ ६८ ॥

कण्टकस्य विमार्गस्य दन्तस्य गणितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ ६९ ॥

शीतलं चन्दनं लोके चन्दनादपि चन्द्रमाः ।
चन्द्रचन्दनयोर्मध्ये शीतलः साधुसङ्गमः ॥ ७० ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किम्,
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किम्,
कल्पं स्थितं तनुभृतां तनुभिः ततः किम् ? ॥ ७१ ॥

सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतेव भूः ॥ ७२ ॥

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ७३ ॥

नाच्छादयति कौपीनं न दंशमशकापहम् ।
शुनः पुच्छमिवानर्थं पाण्डित्यं धर्मवर्जितम् ॥ ७४ ॥

आचारः कुलमाख्याति देशमाख्याति भाषितम् ।
सम्भ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् ॥ ७५ ॥
तथा वृत्तिः समुद्रस्य तथा वासस्य भोजनम् ।
तथादानं तथार्थेषु मोचस्यापकनिर्णया ॥ ७६ ॥
दूरस्थोऽपि समीपस्थो यो यो यस्य मनसि वर्त्तते ।
हृदये यो न वर्त्तेत समीपस्थोऽपिदूरतः ॥ ७७ ॥

गिरौकलापी गगने पयोदः,
लक्षान्तरे भानुर्जले च पद्मम् ।
इन्दु द्विलक्षे कुमुदस्य बन्धु,
यो यस्य मित्रो नहि तस्य दूरम् ॥ ७८ ॥

न च भवति वियोगो दुःख विच्छेदहेतो,
जगति गुणनिधीनां सज्जनानां कदाचित् ।
घनपटलनिरुद्धो दूरगोऽपिचन्द्रः,
किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ ७९ ॥

सर्व्वोपायमिव रत्नानां प्रोक्तं रत्नमुत्तमम् ।
तदर्थे रत्नमिच्छन्ति तस्मिन् त्यक्ते धनेन किम् ? ॥ ८० ॥

पयोधरश्रिया. परमेव सारम्,
पर मर्त्ये सन्ति देवदेवाः ।
तथापि यस्या शयने मरालो,
रतीक्षणा यात्र सुखस्य सारम् ॥ ८१ ॥

आकारं विनिगूहता रिपुबलं जेतुं समुत्तिष्ठताम्,
तन्त्रं चिन्तयता कृताकृत शत-व्यापार मारोहताम् ।
मन्त्रि प्रोक्तनिषेधिना क्षितिभुजामाशङ्कता सर्व्वतः,
दुःखाम्भोनिधिवर्त्तिनां सुखलव कान्तासमालिङ्गनम् ॥ ८२ ॥

श्रुत दृष्ट स्पृष्ट स्मृतमपि हृदाह्लाद जननम्,
नरत्न स्त्रीभ्योऽन्यत्क्वचिदपि कृत लोकपतिना ।
तदर्थे धर्मार्थौ सुखविषय सौख्यानिच तत.,
वहंते लक्ष्मीमाश्याः सतत सबला' सन्ति विभवैः ॥८३॥
धिक् तस्य मूढमनस कुकवेः कवित्वम्,
य स्त्रीमुखच शशिनश्च समीकरोति ।
भ्रूभङ्ग विभ्रम कटाक्ष निरीक्षणानि,
केंच प्रसादहसितानि कृत शशाङ्के ॥ ८४ ॥
असारे खलु ससारे सार सारङ्ग लोचना ।
तदर्थं धनमिच्छन्ति तत्त्यागेन धनेन किम् ? ॥ ८५ ॥
नून हि ते कविवरा विपरीत बाधा,
ये नित्यमाहुरबला इति कामिनीनाम् ।
याभिर्विलोलतरतारक दृष्टिपातै
शक्रादयोऽपि विजिता ह्यबला' कथ ता. ॥ ८६ ॥
श्रोताशी यदि सौरभ यदि भवदिन्दीवरे रञ्जिमा,
माधुर्य यदि विद्रुमे तरलता कन्दर्पचापे यदि ।
रम्भाया यदि विप्रतीपवलनं लभ्येयमान तदा,
तदङ्ग तदिहैवच तदधर तद्भ्रूलतादृद्दयम ॥ ८७ ॥
अबलेति परीवादो तथापि हरिणीदृशाम् ।
यासा नेत्र निपातेन नटवद् घूर्णते जगत् ॥ ८८ ॥
लावण्य द्रविणव्ययो नगणित क्लेशोमहान् स्वीकृत,
स्वच्छन्दस्यमुख जनस्य वसतश्चिन्तानलोद्दीपित' ।
एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता,
कोऽर्थश्चेतसि वेधसा विनिहतस्तन्व्यास्तनु तन्वता ॥८९॥

नामृत न विष कश्चिदेकेन तु नितम्बिनी।
सैवामृतानुरक्ता स्त्री विरक्ता विषवल्लरी ॥ ९० ॥
गन्तव्य यदिनाम निश्चितमहो गन्तासि कैय त्वरा,
द्वित्राण्येव पदानि तिष्ठतु भवान् पश्यामि यावन्मुखम्।
संसारे घटिका प्रवाह विगलद्धारा समे जीविते,
को जानाति पुनस्त्वया सह मम स्याद्वानवा सङ्गम ॥९१॥
चन्द्राक वदरी यक्षो कुमारक वदरी गई।
तादृशावण सम्बन्धाद् यूय यूयं वय वयम् ॥ ९२ ॥
एकएव परीमानी वने वसति चातक।
पिपासितोवा म्रियते याचते वा पुरन्दरम् ॥ ९३ ॥
चक्रबाधकत्वे प्राणान् सन्धारयति शिखिर।
याच्ञाभङ्गभयाद्भीतो न देव मपि याचते ॥ ९४ ॥
वन्ध्याष्टमे स्त्री त्यज्यात् नवमेतु मृतप्रजा।
एकादशे स्त्री जननी सद्यस्त्वप्रियवादिनी ॥ ९५ ॥
अनर्थित्वान्मनुष्याणा भयात्परिजनस्य च।
मर्यादाया समर्यादा स्त्रिय तिष्ठन्ति भर्त्तृषु ॥ ९६ ॥
स्त्रीत्वं चौरत्वमेकान्त पुंसोलाभ नियन्त्रणा।
यत्र वर्षाम्यस्तत्र बातमूलं त्वयस्य च ॥ ९७ ॥
चत्र यान्त गज सत्त हयम कामसीधितम्।
शूद्रमचरयुक्त दूरत परिवर्जयेत् ॥ ९८ ॥
प्रत्यक्षे गुरवस्तुत्या परोक्षे मित्रबान्धवा।
भृत्या कर्मान्ते सुतास्तु पुत्रादासास्तथा ॥ ९९ ॥
विदग्ध वनितापाङ्गदर्शनादेव सत्सुखम्।
न तत् प्राकृतनारीणां गाढालिङ्गन ............ ॥ १०० ॥

समस्तैर्नायकगुणैर्भूषितः भवेि मे पतिः ।
स एव यदि जारः स्यात्सफलं जीवितं भवेत् ॥ १०१ ॥
प्राकारेण धनो गिरा परभृतः पारावतयुस्वने,
हंसचक्रमणे शुचि सुरगुरू रत्वां प्रमत्तीगजः ।
इत्थं भर्त्तरिमे समस्त युवति श्लाघ्यैर्गुणैः सेविते ;
दुःखं नास्ति विधाविते पतिरसौ स्यादेकदोषो यदि ॥८०२॥
जातेतिचिन्ता महतीं प्रसूतै,
देयाद्य कोवेति विचार दुःखम् ।
दत्तापुत्र तिष्ठति वा न वेति
कन्यापितृत्वं खलु नाटमेव ॥ १०३ ॥
नदी यौवनसम्पन्ना फल छन्नस्य यौवनम् ।
स्त्रियाः स्तनो यौवन स्याद्वन पुंसां हि यौवनम् ॥ १०४ ॥
किं कोकिलस्य रचितेन गले वसन्तं,
किं कातरस्य बहुशास्त्रपरिग्रहेण ।
किं मन्त्रितेन सुभटस्य पराङ्मुखस्य,
किं जीवितेन रिपुपादतले दर्शितेन ॥ १०५ ॥
पदगद्गदता स्वेदो मुखे वैवर्ण्यवेपथू ।
म्रियमाणस्य चिह्नानि यानि तान्येव याचतः ॥ १०६ ॥
कृमस्य कोटरगतस्य दावनिष्क्रमितस्तथा ।
शरीरस्योपरतस्य वरं अथ न याचितं. ॥ १०७ ॥
तावत्तपस्वी तेजस्वी शूरः प्राज्ञः कुलोद्यतः ।
पुमानित्युच्यते तावद् यावदर्थी न कस्यचित् ॥ १०८ ॥
जगतां पतिरर्थित्वाद् विष्णुर्वामनतां गतः ।
कोऽन्योऽधिकतरस्तस्माद् योऽर्थी याति न लाघवम् ॥१०९॥

लज्जावतः कुलीनस्य वित्तं याचितुमिच्छतः ।
कण्ठे पारावतस्येव वाक्करोति गतागतम् ॥ ११० ॥
भास्करोऽपि यदि ब्रूयाद्देहीति कृपणं वचः ।
दीप्तो रश्मिसहस्रेण सोऽपि शीतलतां व्रजेत् ॥ १११ ॥

सन्तोषैश्वर्यसुखिना दूरे दुर्गतिभूमयः ।
भोगाशापाशबद्धानामपमानः पदे पदे ॥ ११२ ॥
सन्त सन्तोषशृङ्गेण तृष्णाकल्लोलिनो भवे ।
जन्मस्थानाच्च निस्थानाच्च यथास्ति सजसन्ततिम् ॥ ११३ ॥
कुलं शीलञ्च सत्यञ्च प्रज्ञातेजो धृतिर्बलम् ।
गौरवं प्रत्ययः स्नेहो दारिद्र्येण विनश्यति ॥ ११४ ॥

कुटुम्बचिन्ताकुलितस्य पुंसः,
श्रुतञ्च शीलञ्च गुणाश्च सर्वे ।
अपक्वकुम्भे निहिता इवापः,
प्रयान्ति तेनैव समं विनाशम् ॥ ११५ ॥

वर्णितं धनमेकमुद्दश्य सखे । दारिद्र्यभारं गुरुम्,
यान्नस्तावदहं चिरावरयेऽहं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन विदुषा तत्र श्मशाने शवः,
दारिद्र्यात्मरणं वरं सुखमिति ज्ञात्वा स तूष्णीं स्थितः ॥११६॥
माता चैका पिता चैको मम तस्य च पक्षिणः ।
अहं मुनिभिरानीतः स चानीतो गवाशनैः ॥ ११७ ॥

गवाशिवाक्यानि स वक्ति नित्यम्,
अहं मुनीनां वचनानि वच्मि ।
प्रत्यक्षमेतद् भवतैव दृष्टम्,
संसर्गजा दोषगुणा भवन्ति ॥ ११८ ॥

खड्गस्य गुणहीनस्य तैक्ष्ण्य सुपुकप वपु ।
युक्त न तु गुणाढ्यस्य धनुष प्राणिहिंसनम ॥ ११९ ॥
गुणवानेव नमते पुरुष कार्म्मुक यथा ।
स एव स्तब्धतामेति निर्गुण कार्म्मुक यथा ॥ १२० ॥
स एव गुणवान् धन्याद्धन्य कान्तपर्य्यये ।
स एव पुरुषो दाता पुनर्भवति याचक ॥ १२१ ॥
यथोपायमवस्थाय नर्धमिच्छामि राघव ॥
तस्यैव येय इच्छामि कार्य्याणां चलना गति ॥ १२२ ॥
गुणा सर्व्वत्र पूज्यन्ते पितृवंशो निरर्थक ।
वासुदेव नमस्यन्ति वसुदेव न कंचन ॥ १२३ ॥
भ्रष्ट जन्मभूवस्तनाऽम्बुधिमय पूरैव दूरीकृतम,
लग्न तीरवने वनेचरशतैरात्त तत खण्डितम ।
विक्रीत तुलित तत खरशिलापृष्ट जनैर्वन्दनम्,
यन्नुन्ने करटे विपत्स्वपि गुणे का नाम नो पूज्यते ॥१२४॥
गुणा खलु गुणा एव न गुणा धनहेतव ।
अर्थसञ्चयकर्त्तृणि भाण्डानि प्रगणीव हि ॥ १२५ ॥
गुणा खलु गुणा एव न गुणा धनहेतव ।
सगुणो निष्फल चाप निर्गुण सफल शर ॥ १२६ ॥

　　गुणा गुणज्ञेषु गुणा भवन्ति,
　　ते निर्गुण प्राप्य भवन्ति दोषा ।
　　सुस्वादुतोय प्रभवाहि नद्य ,
　　समुद्रमासाद्य भवन्त्यपेया ॥ १२७ ॥
　　गुणैर्न किञ्चिद् विदुषां प्रयोजनम्,
　　खलोऽर्थभागी सुगुणश्च निर्धन ।

यथा हि काको लभते गरुडाद्बलिम्,
तथा न हंसो न शुको न चातकः ॥ १२८ ॥

सन्तोऽपि न प्रकाशन्ते दरिद्रस्याखिला गुणाः।
भास्वानिव पदार्थानां श्रीर्गुणानां प्रकाशिनी ॥ १२९ ॥

मणिः शाणोल्लीढः समरविजयी हेतिनिहतः,
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना।
कलाशेषश्चन्द्रः सुरतमृदिता बालललना,
न निम्नाः शोभन्ते क्षयित-विभवाश्चार्थिषु नराः ॥ १३० ॥

शशी भाति सुनिर्मलेऽथ गगने तारा विचित्रेऽम्बरे,
हारो भाति च कामिनीकुचतटे पीनोन्नते यौवने।
हंसो भाति सरोवरे सजलिते वैदूर्यवर्णोदके,
राजा भाति सुमन्त्रिभि परिवृतः श्रीधाम्नि सिंहासने ॥१३१॥

स्वच्छं सज्जनचित्तवल्लघुतरं दीनार्त्तिवच्छीतलम्,
पत्राविद्धनवत्तथैव मधुरं तद्वाक्सम्भाषवत्।
जीवस्यापि हि जीवितं द्रविणवद्व्यापद्घ तुमयत, *
मत्यं पापहरं हरिस्मरणवत्पानीयमानीयताम् ॥ १३२ ॥

व्यायामिकोऽस्मि चतुरोऽस्मि विचक्षणोऽस्मि,
विद्याधरोऽस्मि पटुरस्मि न चास्मि भीरुः।
कार्यं करोमि सततं न च सिद्धिरस्ति,
दैवं न सम्बहति कोऽत्र ममापराधः ॥ १३३ ॥

जानामि धर्मं न च मे प्रवृत्तिः, जानाम्यधर्मं न च मे निवृत्तिः।
केनापि देवेन हृदिस्थितेन, यथा नियुक्तोऽस्मि तथा करोमि ॥१३४॥

---

बोद्धव्यं पर्य्यायमात्रं शोभते।

साधयति यत्प्रयोजनमन्यः,
यदि तदस्य काकतालीयम् ।
अविदन्नपि किमप्यक्षरम्,
उल्लिखति घुणोऽपि काष्ठेषु ॥ १३५ ॥
जः कण्टकानां प्रकरोति तैक्ष्ण्यम्,
विचित्रभावं मृगपक्षिणाञ्च ।
माधुर्य्यमिक्षौ कटुता च निम्बे,
स्वभावतः सर्वमिदं हि सिद्धम् ॥ १३६ ॥
अर्थस्य मूलं निकृतिर्नयश्च,
धर्मस्य कारुण्यमकैतवश्च ।
कामस्य वित्तञ्च वपुर्वयश्च,
मोक्षस्य सर्वार्थनिवृत्तिरेव ॥ १३७ ॥

विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ।
नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ १३८ ॥
कविरेव कवेर्वेत्ति कविकर्म्मणि कौशलम् ।
शेषाहिरेव जानाति भुवो भारस्य निश्चयम् ॥ १३९ ॥
देशे हि यत्र करभ. कलभश्च तुल्यौ,
यत्रापि नास्ति हयरासभयोर्विचारः ।
काचोपलस्य च मणेश्च न यत्र भेदः,
को नाम तत्र गुणिनामधिवासरागः ॥ १४० ॥
गुणा यत्र न पूज्यन्ते गुणिनामत्र का कथा ? ।
नग्न क्षपणकग्रामे रजकः किं करिष्यति ? ॥ १४१ ॥
भिद्यन्ति कल्पान्ते मर्य्यादां सागरस्त्यजेत् ।
प्रतिपन्नमहाः सन्तो न चलन्ति कदाचन ॥ १४२ ॥

हंसो न भाति बलिभोजनवृन्दमध्ये,
गोमायुमण्डलगतो न विभाति सिंहः ।
जात्यो न भाति तुरगः खरयूथमध्ये,
विद्वान्न भाति पुरुषेषु निरक्षरेषु ॥ १४३ ॥

विन्ध्यः पुरा रविरथावधिरुद्ध-मूर्द्धा,
निम्नत्वमाप वचनात्किलकुम्भयोनेः ।
नाद्यापि लङ्घयति सत्यमिति प्रतिज्ञा-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १४४ ॥

अद्यापि नोज्झति हरः किलकालकूटम्
शेषो बिभर्त्ति धरणीं खलु मस्तकेषु ।
अम्भोनिधिर्वहति दुर्वहवाडवाग्निम्,
अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १४५ ॥

उत्पलस्य च पद्मस्य मत्स्यस्य कुसुमस्य च ।
एकजातिप्रसूताना रूप गन्धः पृथक् पृथक् ॥ १४६ ॥

मृगा मृगैः सङ्गमनुव्रजन्ति,
गोभिश्च गावस्तुरगास्तुरङ्गैः ।
मूर्खाश्च मूर्खैः कवयः कवीन्द्रैः,
समानशीलाय समानशीले ॥ १४७ ॥

अम्भोधिः स्थलतां स्थलं जलधितां धूलिलवः शैलताम्,
मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् ।
वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया,
लीलादुर्ललिताद्भुतव्यसनिने देवाय तस्मै नमः ॥ १४८ ॥

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा,
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।

व्रणस्तत्यशितेन सत्वरमसौ तेनैव यातः पथा,
स्वस्थस्तिष्ठति दैवमेव हि नृणां वृद्धौ क्षये चोद्यताम् ॥ १४९ ॥
खल्वाटो दिवसेश्वरस्य किरणैः सन्तापिते मस्तके,
वाञ्छन् देशमनातपं द्रुततरं बिल्वस्य मूलङ्गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं समस्तं शिरः,
प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनम् ॥ १५० ॥
सिंहिकासुत सन्त्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ १५१ ॥

पिता विवेकः सुमतिर्जनित्री,
स्वसात्महिंसा दयिता दयैव ।
धर्मः सहायः करुणा कुमारी,
सुतस्तथा दीन-जनोपकारः ॥ १५२ ॥

धैर्यं यस्य पिता क्षमा च जननी शान्तिः सदा गेहिनी,
सत्यं सूनुरयं दया च भगिनी भ्राता मनः संयमः ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनम्,
यस्यास्तीह कुटुम्बिनो वद सखे । कस्माद्भयं योगिनः ॥१५३॥
स्थानं प्रधानं न बलं प्रधानं स्थानस्थितः कापुरुषोऽपि सिंहः ।
जानामि रे पन्नग । ते प्रभावं कण्ठस्थितो गर्जसि शङ्करस्य ॥१५४॥
शिरसा धार्यमाणोऽपि सोमः सौम्येन शम्भुना ।
तथापि कृशतां धत्ते कष्टं खलु पराश्रयः ॥ १५५ ॥
आपद्गतं हससि किं द्रविणान्धमूढ ।
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
एतान् प्रपश्यसि घटान् जलयन्त्रमध्ये,
रिक्ता भवन्ति पूरिता भरिताश्च रिक्ताः ॥ १५६ ॥

अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ।
इति कारुणिको नूनं धनं मे भूरि नाददत् ॥ १५७ ॥
किं पाद्यं भवते भवेत्सुरसरित्पादोदकाय प्रभो !
को दीपस्तरणिप्रभाय गरुडारूढाय किं वाहनम् ।
किञ्चीर्ण्यं जगदन्नदाय वसनं किं दिव्यवासोधृते,
किं स्तोत्रं निगमागमाय तदलं भक्तिर्भवत्तुष्टये ॥ १५८ ॥
व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का ?
का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम् ।
कुब्जाया किमु नाम रूपमधिकं किन्तत्सुदाम्नो धनम् ?
भक्त्या तुष्यति केवलं हरिरतो भक्तिप्रियो माधवः ॥ १५९ ॥
स्वर्गापवर्गयोः पुंसां रमायां भुवि सम्पदाम् ।
सर्व्वासां कार्य्यसिद्धीनां मूलं तच्चरणार्चनम् ॥ १६० ॥
कोऽत्र दरिद्रः पापीयान् क कृपा. श्रीनिकेतनः ? ।
अजामिलमुखिति पाप आकुञ्चा परिरक्षितः ॥ १६१ ॥
प्रपद्य विपुलां लक्ष्मीं यः करोति न सञ्चयम् ।
धनानां चैव पक्षाणां भूपसः स इति स्मृत. ॥ १६२ ॥
शास्त्रभीतस्य विप्रस्य रणभीतस्य क्षत्रिय. ।
धनाढ्यो दानभीतस्य वयो स्वर्गं न गच्छति ॥ १६३ ॥
चाणक्य नीतिशास्त्रमिदं कण्ठे बिभ्रति ये बुधाः ।
प्रहित भोजराजेन भुवि किं प्राप्यते न तैः ? ॥ १६४ ॥

*इति चाणक्यराजनीतिशास्त्रेऽष्टमोऽध्यायः समाप्तः ॥ ८ ॥*

---

समाप्तोऽयं ग्रन्थः ॥